वि. भाभा. ग्रन्थमाला—३८

# ब्राह्मणोद्धार-कोषः

स च

वैदिक-वाङ्मये संहितान्तर्गत-ब्राह्मण-भागेभ्यो ब्राह्मणारण्यकेभ्य-
श्च समुद्धृतानां वाक्य-विशेषाणां प्राचीन-भारतीय-
विविध-विद्या-विमर्शौपयिकानां सतां
संग्रहात्मकस्सन्

भीमदेवः, हंसराजः
इत्येताभ्यां सहकृतेन

विश्वबन्धुना

संपादितः

होशिआरपुरम्
विश्वेश्वरानन्द-संस्थानम्
२०२३ वि.

# समर्पणम्

ओं धी-धाम-प्रचेतिन्यै शब्द-ब्रह्म-स्वयम्भुवे।
भगवत्यै सरस्वत्यै भूयोभूयो नमोनमः॥ १॥

ज्ञान-विज्ञान-जीवन्ती सारिणी भय-वारिणी।
शरणं मे परं भूयाद् मति-माता सरस्वती॥ २॥

विद्याम्बुधिः क्व गम्भीरः क्वाऽयं हीनप्लवो जनः।
तरङ्गोत्तोलितस्य स्याः सहाया देवि मे सदा॥ ३॥

तव प्रवाहं प्रततं प्रवेगं शक्तोऽवगाढुं भवति स्वतः कः।
प्रसादये तत् करुणावति त्वां निष्णापयेर्मां तव हस्तधारम्॥ ४॥

तव प्रसादः खलु देवमातः सौजन्यसौशील्यसुधासुधावैः।
पापप्रमुक्तानथ पुण्ययुक्तान् शुद्धान् पवित्रान् निपुणांस्तनोति॥ ५॥

तव प्रभावान्ननु मानवानां तिर्यक्त्व-मोक्षो मनुताविकासः।
सद्बुद्धियोगः सुगतेः प्रकाशश्चारित्र्यशुद्धिः सुमतेर्विलासः॥ ६॥

त्वमेव शास्त्री भवसीह गुर्वी सद्देशनानां जगतां गुरूणाम्।
तीर्थङ्कराणां श्रुतिपाठकानां योगेश्वराणां भगवद्व्रतानाम्॥ ७॥

त्वदेकनिष्ठस्य नु यत्न एष त्वद्भक्तिरक्तेर्मम विश्वबन्धो।
संसारसर्वस्वविधानसारे स्यात् प्रीतये ते निगमाऽऽगमेशे॥ ८॥

त्वदीया प्रेरणा बीजं त्वत्प्रसादः प्रवर्धकः।
पुष्पपत्रनिभं देवि भवेदेतत्तवार्पितम्॥ ९॥

सत्यमात्रावलोकानां सत्यसारं च संगिराम्।
सर्वत्र सर्वदा चैव त्वद्भक्तानां तथार्पितम्॥ १०॥

विश्वबन्धुः

# प्राक्कथनम्

वैदिकशोधकार्यनिर्वाहार्थं नानाविधानां संदर्भ-ग्रन्थानां चिरादेव भूयस्यपेक्षाऽन्वभावि। अस्माकं संस्थानस्य एतेषां ग्रन्थानां संकलने संपादने प्रकाशने च सततं प्रयतमानस्य त्रिषष्टिवर्षाणि व्यतीतानि। स्वदेशीयैर्विदेशीयैश्च विद्वन्मूर्धन्यैः प्रमाणीकृतः संभूय षोडशखण्डात्मक एकादश-सहस्रपृष्ठको वैदिकपदानुक्रमकोषस्तत्र विशेष्योल्लेख्यः। ग्रन्थोऽयम् उपलभ्यमानोपपञ्चशतवैदिक-ग्रन्थस्थसकलपदजातसंग्रहस्वरूपः प्रतिपदप्रतियुक्तस्थलसर्वस्वनिर्देशैः समवेतानां यथापेक्षं यथासंगतं च ध्वनिविज्ञानेन, स्वरेण, परम्पराप्राप्तैर्भाषाविज्ञानमूलकप्रागैतिहासिकैश्च निर्वचनैर्व्याकरणेन पाठ-मीमांसाभिश्च समन्वितैस्तुलनालोचनात्मकैष्टिप्पणैरलङ्कृतानाम् अकारादिवर्णक्रमेणाङ्कितानां शब्दानां महाकोषः।

उद्धारात्मकानामपि त्रयाणां वैदिककोषाणां निर्माणयोजनायाः संस्थानेन समारब्धायाः कति-चिद् वर्षाणि व्यगमन्। तत्र संहितोद्धारकोषार्थम् अपेक्ष्यमाणाः पदार्थाः संकल्यन्ते। उपकल्पित-संभार उपनिषदुद्धारकोषः संपाद्यमानः प्रवर्तते। सिद्धो ब्राह्मणोद्धारकोषश्चायं संप्रति प्रकाश्यते। अनुपदं दीयमानायां ग्रन्थसंक्षेपसूच्यां कृतोद्देशा षड्विंशतिसंख्याका ग्रन्था एवास्याधारतया समाश्रिताः। ते चाऽऽकरग्रन्थाः खलु कृष्णयजुर्वेदस्योपलब्धसंहितानां ब्राह्मणभागा अन्यानि ब्राह्मणानि आरण्यकानि च। मन्त्रार्थविचारे देवताविचारे चौपयिकतां भजन्ति व्याकरणनिरुक्तच्छन्दःकर्मकाण्ड-सदाचारपौराणिकगाथादर्शनशास्त्रेतिहासभूगोलायुर्वेदधनुर्वेदगान्धर्ववेदादिभिः प्राचीनाभिर्भारतीय-विविधविद्याभिश्च संबद्धानि वाक्यानि संकलितानि। तानि चोपपञ्चविंशतिसहस्राणि संकलितानि वाक्यानि बिभर्त्ययं कोषः।

तानि चोपपञ्चविंशतिसहस्राणि वाक्यानि सुव्यवस्थितसंपादनार्थं प्रतिवाक्यं मुख्यं भावं लक्ष्यी-कृत्योपकल्पितानां शीर्षकशब्दानाम् उत्तरतो यथायोगम् उपनिबद्धानि सन्ति। ते च शीर्षकशब्दा उपचतुःसहस्राः, वर्णक्रमानुसारी च तदीय उपनिबन्धः।

सन्ति चान्यान्यपि संपादनवैशिष्ट्यानि। तथा हि—

१. शीर्षकशब्दाः प्रातिपदिकरूपेण सव्ये पृष्ठस्य प्रान्तभागे स्थूलाक्षरैर्मुद्रिताः।

२. शीर्षकशब्देभ्य उत्तरं किंचिदपसव्यतो यथायोगं संबद्धानि वाक्यानि निवेशितानि। तानि च क्रमाङ्कपुरस्सरं वर्णक्रमेण सूक्ष्माक्षरैर्मुद्रितानि।

३. यदि केनचिच्छीर्षकशब्देन संबद्धं वाक्यम् एकमेव भवति, तदा तत् शीर्षकेण समानायामेव पङ्क्तौ दीयते।

४. शीर्षकशब्दा येषु वाक्येषु समासपूर्वपदीभूता उपलभ्यन्ते तानि वाक्यानि तत्रैवान्त उप-शीर्षकीकृतस्य समस्तशब्दस्योत्तरतः स्थाप्यन्ते।

५. शीर्षकशब्दसंबद्धानां वाक्यानामन्ते तन्निष्पन्नान् तद्धितान्तानपि शब्दान् उपशीर्षकीकृत्य तदुत्तरं वाक्यानि स्थापितानि।

६. उद्धृतवाक्यानामन्ते तत्तत्संबद्धाः सर्वेऽपि ग्रन्थस्थलसंकेता दत्ताः ।

७. उद्धृतवाक्यानां सार्थकान्यांशिकानि पाठान्तराण्यपि तत्संबद्धग्रन्थनामसहितानि कोष्ठकेष्वन्तः प्रदर्शितानि ।

८. वाक्येष्वपठितान्यपि वाक्यपठितसर्वनामसंबद्धानि नामपदानि कोष्ठकेष्वन्तः सूक्ष्माक्षरैर्मुद्रितानि ।

९. प्रसङ्गान् स्पष्टयितुं यथापेक्षम् अतिरिक्ता अपि शब्दा दत्ताः, ते च कोष्ठकेषु सूक्ष्माक्षरैर्मुद्रिताः ।

१०. अनेकशीर्षकसाधारणानि वाक्यानि वर्णक्रमेण प्रथमनिर्दिष्टेभ्य एव शीर्षकेभ्य उत्तरं स्थापितानि । अवशिष्टशीर्षकस्थलेषु तु तानि प्राथमिकानि शीर्षकाणि यथायोगं परामर्शितानि ।

११. मैत्रायणीसंहितायाः संधिप्रकाराः संहितान्तरसन्धिप्रकारेभ्यः कंचिद् विशेषम् आदधति । ते च यथाश्रुतमेव निवेशिताः ।

प्राध्यापकाभ्यां मैकडानल-कीथाभ्यां स्वप्रणीतायां वैदिकसूच्यां (A Vedic Index) वैदिकसाहित्य उपलभ्यमानानि संबद्धविवरणैः समन्वितानि वैयक्तिकनामपदानि च अन्यान् विविधान् विषयांश्च परिगृह्णत्यामपि आधारभूतानि मूलवाक्यानि नैव निर्दिष्टानि, अपि तु तत्तत्संबद्धस्थलसंकेतमात्रं कृतम् । प्राध्यापकेन ब्लूमफील्डेन स्वविरचिते वैदिककोषे (A Vedic Concordance) मन्त्रपादा एव समुद्धृताः, न तु ब्राह्मणवाक्यानि समुद्धृतानि । अयं प्रस्तुतः कोषस्तु मूलवाक्योद्धारस्वरूपत्वात् पूर्वोक्तयोः ग्रन्थयोः प्रथमस्य, ब्राह्मणवाक्योद्धारस्वरूपत्वाच्च तयोर्द्वितीयस्य पूरकः ।

प्रस्तुतकोषेण तुल्यरचनाप्रकारोऽपरो ग्रन्थः श्रीहंसराजेन संगृहीतो लाभपुरतोऽस्माकं दयानन्दमहाविद्यालयसंस्कृतग्रन्थमालाया अष्टमाङ्करूपेण वैदिककोषनाम्ना प्रकाशितः (१९२६ ई.) । असौ च चिराद् नोपलभ्यते । वर्तमानप्रकाशनेन समानोद्देश्यः सन्नप्यसौ ग्रन्थः केषुचिदंशेषु सदोषताम् अभजत् । तथा हि—

१. तत्राष्टादशभ्य एव ग्रन्थेभ्यो वाक्यानि समुद्धृतानि ।

२. तत्रोपाष्टसहस्राण्येव वाक्यानि संगृहीतानि ।

३. शीर्षकशब्दानां प्रथमया एव विभक्त्या निर्देश्यत्वनियमाद् अन्यविभक्त्यन्तशब्दवन्ति वाक्यान्युपयोगीन्यपि सन्ति नोपादातुम् अशक्यन्त ।

४. तत्र समस्तास्तद्धितान्ताश्च शब्दाः शीर्षकतया नोपयुक्ता इति कृत्वा अन्यान्यपि बहूनि वाक्यानि न समावेशितानि ।

५. तत्रानेकग्रन्थसाधारणे वाक्ये एकस्यैव ग्रन्थस्य स्थलनिर्देशः कृतः ।

६. सकृदुद्धृतानां वाक्यानाम् अन्यत्र पुनः परामर्शमात्रेणैव निर्वाहे साधयितुं शक्येऽपि तानि तत्र पुनःपुनर्निर्दिष्टानि ।

शास्त्री, एम. ए., एम. ओ. एल इत्युपाधिधरः श्रीभीमदेवः श्रीहंसराजश्च वर्तमानग्रन्थ-निर्माणभारस्य निर्वहणे प्रस्तुतलेखकस्य नान्तरीयसहायकावभूताम्, तौ च वस्तुनः संकलनसंपादनयो-मुद्रणशोधे च श्रीसूर्यनारायणशर्मकाव्यतीर्थेन, श्रीसच्चिदानन्दझासाहित्याचार्येण, श्रीदुर्गादत्तशास्त्रिणा, श्रीदेवराजशर्मशास्त्रिणा च दत्तहस्तावभूताम् ।

अहं तान् सहयोगिनो विदुषः क्षमतया योग्यतया च विहिततत्तत्कार्यान् मुद्रणविभागीयान् कर्मिष्ठांश्च प्रति हार्दिकान् साधुवादान् वदामि । अन्ततः, अहं कार्यकारिणीसमित्या आत्मनश्च सकाशात् प्रकाशनव्ययस्यार्धांशम् अनुदातुर्विश्वविद्यालयीयानुदानायोगस्य शिष्टस्य व्ययार्धस्य पूरणे कृतोदारसाहाय्यकानाम् अन्येषां च सर्वेषां संरक्षकाणां कृतज्ञतापूर्वकं धन्यवादान् बहून् वदामि ॥

विश्वेश्वरानन्द-संस्थानम्, विश्वबन्धुः
साधुआश्रमः, होशिआरपुरम्
वाल्मीकि-जयन्ती (अक्तूबर, २९), १९६६

# संक्षेप (Abbreviations)

## आधारग्रन्थीय (of Basic Texts, their Editions & Commentaries)

ऐ. = ऐतरेयब्राह्मण, सायण-भाष्य समेत, संपादित काशीनाथ शास्त्री, आनन्दाश्रम, पूना, १८९६ ई.।

_______ सायण-भाष्य समेत, संपादित सत्यव्रत सामश्रमी, BI. कलिकाता १८९५-१९०६ ई.।

_______ इंग्लिश-अनुवाद सहित, संपादित एम्. हाग (Haug, M.), बम्बई, १८६३ ई.।

_______ संपादित थिओडर आफ्रेक्ट (Aufrecht, Th.), बोन (Bonn), १८७९ ई.।

_______ इंग्लिश-अनुवाद, ए. बी. कीथ (Keith, A. B.), हारवर्ड ओरियंटल ग्रन्थमाला, (Harward Oriental series), १९२० ई.।

ऐआ. = ऐतरेयारण्यक, इंग्लिश-अनुवाद सहित, संपादित ए. बी. कीथ (Keith, A. B.) आक्सफोर्ड (Oxford), १९०८ ई.।

_______ सायण-भाष्य सहित, संपादित बाबा शास्त्री फडके, आनन्दाश्रम, पूना, १८९८ ई.।

_______ सायण-भाष्य सहित, संपादित राजेन्द्रलाल मित्र, BI. कलिकाता १८७६ ई.।

क. = कपिष्ठलकठसंहिता, संपादित रघुवीर, मेहरचन्दलक्ष्मणदाससंस्कृतप्राकृत ग्रन्थमाला, लाहौर, १९३२ ई.।

का.,काठ. = काठकसंहिता, संपादित एल् फान श्रेडर (Schroeder, L. von), लाइप्सिग् (Leipzig) १९००, १९०९-१० ई.।

_______ संपादित सान्तवलेकर, भारत मुद्रणालय, औंध, १९४३ ई.।

काठसंक.= काठकसंकलन, संपादित सूर्यकान्त, मेहरचन्दलक्ष्मणदास संस्कृत प्राकृत ग्रन्थमाला, लाहौर १९४३ ई.।

काश. = काण्वीय-शतपथब्राह्मण, संपादित विलेम कैलण्ड (Caland, W.), मोतीलाल बनारसीदास, लाहौर, १९२६ ई.।

कौ. = कौषीतकिब्राह्मण (= शाङ्खायनब्राह्मण), संपादित बी. लिंडनर (Lindner, B.) Jena, १८८७ ई.

_______ इंग्लिश-अनुवाद, ए. बी. कीथ (Keith, A. B.), लंडन (London), १९२० ई.।

कौउ. = कौषीतकिब्राह्मणोपनिषद्, संपादित वासुदेव शर्मा, निर्णयसागर प्रेस, बम्बई, १९१७ ई.।

_______ संपादित हरिनारायण आपटे, आनन्दाश्रम, पूना, १९०० ई.।

_______ उपनिषद्ब्रह्मयोगि-भाष्य समेत, संपादित, महादेव शास्त्री, अड्यार, मद्रास, १९२१ ई.।

गो. = गोपथब्राह्मण, संपादित डी. गास्ट्रा (Gaastra, D.), लाइडन (Leiden), १९१९ ई.।

_______ संपादित राजेन्द्रलाल मित्र, BI., कलिकाता, १८७२ ई.।

_______ संपादित जीवानन्द विद्यासागर, कलिकाता, १८९१ ई.।

जै. = जैमिनीयब्राह्मण, संपादित रघुवीर-लोकेशचन्द्र, सरस्वती विहार, नागपुर, १९५४ ई.।

——— २१२ ब्राह्मणसंग्रह, जर्मन अनुवाद सहित, संपादित, विलेम कैलण्ड (Caland, W.), आम्स्टर्डम (Amsterdam), १९१९ ई.।

जैउ. = जैमिनीयोपनिषद्ब्राह्मण, इंग्लिश-अनुवाद सहित, रोमन-लिपि, संपादित एच्. अर्टल् (Oertel, H.), न्यू हावन, (New Haven), १८९४ ई.।

——— देवनागरी-प्रतिलिपि, रामदेव, दयानन्द महाविद्यालय ग्रन्थमाला, लाहौर, १९२१ ई.।

तां. = ताण्ड्यमहाब्राह्मण (=पञ्चविंशब्राह्मण), सायण-भाष्य सहित, संपादित आनन्दचन्द्र वेदान्तवागीश, BI., कलिकाता, १८७०—७४ ई.।

——— संपादित चिन्नस्वामि शास्त्री, काशीसंस्कृत ग्रन्थमाला, बनारस, १९९१ सं.।

——— इंग्लिश-अनुवाद, विलेम कैलण्ड, (Caland, W.), BI., कलिकाता, १९३१ ई.।

तै. = तैत्तिरीयब्राह्मण, सायण-भाष्य सहित, संपादित नारायण शास्त्री, आनन्दाश्रम, पूना, १९३४ ई.।

——— संपादित राजेन्द्रलाल मित्र, BI., कलिकाता, १८५९-९० ई.।

——— भट्टभास्कर-भाष्य सहित, संपादित महादेव शास्त्री, मैसूर, १९०८-२१ ई.।

तैआ. = तैत्तिरीयारण्यक, सायण-भाष्य सहित, संपादित बाबा शास्त्री फडके, आनन्दाश्रम, पूना, १८९७ ई.।

——— संपादित राजेन्द्रलाल मित्र, BI., कलिकाता, १८७२ ई.।

——— भट्टभास्करमिश्र-भाष्य सहित, संपादित महादेव शास्त्री, राजकीयप्राच्यपुस्तकालय ग्रन्थमाला, मैसूर, १९०० ई.।

तैउ. = तैत्तिरीयोपनिषद्, शाङ्कर-भाष्य तथा आनन्दगिरिकृत टीका समेत, संपादित हरिनारायण आपटे, आनन्दाश्रम, पूना, १८९७ ई.।

——— संपादित वासुदेव शर्मा, निर्णयसागर प्रेस, बम्बई, १९१७ ई.।

तैसं. = तैत्तिरीयसंहिता, भट्टभास्करमिश्र-भाष्य सहित, संपादित महादेव शास्त्री, तथा के. रंगाचार्य, राजकीयप्राच्यपुस्तकालय ग्रन्थमाला, मैसूर, १८९४ प्रभृ. ई.।

——— सायण-भाष्य सहित, संपादित काशीनाथ शास्त्री, आनन्दाश्रम, पूना, १९००-०८ ई.।

——— संपादित सातवलेकर, भारत मुद्रणालय, औंध, १९४५ ई.।

दै. = दैवतब्राह्मण (=देवताध्यायब्राह्मण), सायण-भाष्य सहित, संपादित जीवानन्द विद्यासागर, कलिकाता, १८८१ ई.।

——— संपादित बे. रामचन्द्र शर्मा, केन्द्रीय संस्कृत विद्यापीठ, तिरुपति, १९६५ ई.।

मं. = मन्त्रब्राह्मण, स्वोपज्ञभाष्य तथा बंगला-अनुवाद सहित, संपादित सत्यव्रत सामश्रमी, कलिकाता, १८९० ई.।

= छान्दोग्यब्राह्मण, सायण तथा गुणविष्णु भाष्य सहित, संपादित दुर्गामोहन भट्टाचार्य, कलिकाता, १९५८ ई.।

——— १प्रपाठक, संपादित एच्. स्टेनर (Stönner, H.), हाल (Halle), १९०१ ई.।

**माश.** = माध्यन्दिनीयशतपथब्राह्मण, यथोपलब्ध सायण-भाष्य, हरिस्वामी तथा द्विवेदगङ्ग भाष्योद्धार सहित, संपादित ए. वेबर (Weber, A.) लाईप्सिग् (Leipzig), १९२४ ई.।

——— संपादित चन्द्रधर शर्मा, अच्युत ग्रन्थमाला, काशी, १९९४ सं.।

——— सायण-भाष्य ( १-३, ५-७, ९ काण्ड ) सहित, संपादित सत्यव्रत सामश्रमी BI. कलिकाता १९०३-११ ई.।

——— इंग्लिश-अनुवाद, जे. एगलिंग (Eggeling, J.), SBE, लंडन (London ), १८८२-१९०० ई.

——— वैदिक् यन्त्रालय, अजमेर १९०२ ई.।

**मै.** = मैत्रायणी संहिता, संपादित एल्. फान श्रेडर (Schroeder, L. v. ), लाइप्सिग् (Leipzig), १९२३ ई.।

——— संपादित सान्तवलेकर, भारत मुद्रणालय, औंध, १९९८ सं.।

**लुसं.** = लुप्तब्राह्मणोद्धारसंग्रह, संपादित बटकृष्ण घोष, कलिकाता, १९३५ ई.।

**शां** = शाङ्खायनब्राह्मण, संपादित गुलाबराय बजेशंकर, आनन्दाश्रम, पूना, १९११ ई.।

**शांआ.** = शाङ्खायनारण्यक, संपादित श्रीधर शास्त्री, आनन्दाश्रम, पूना, १९२२ ई.।

——— इंग्लिश-अनुवाद, ए. बी. कीथ (Keith, A. B.), लंदन (London), १९०८ ई.।

——— १-२ अध्याय, रोमन लिपि, जर्मन-अनुवाद सहित, संपादित डब्ल्यू. फ्रीडलान्डर (Friedlander, W.), बर्लिन (Berlin), १९०० ई.।

**ष.** = षड्विंशब्राह्मण, सायण-भाष्य सहित, संपादित एच्. एफ. ईलसिंघ (Eelsingh, H. F.), लाइडन (Leiden), १९०८ ई.।

——— संपादित जीवानन्द विद्यासागर, कलिकाता, १८८१ ई.।

——— १ प्रपाठक, संपादित Kurt Klemn, १८९४ ई.।

**सं.** = संहितोपनिषद्ब्राह्मण, द्विजराजभट्ट-भाष्य सहित, संपादित ए. सी. बर्नेल (Burnell), A. C.), मैंगलोर, १८७७ ई.।

——— द्विजराजभट्ट तथा सायण भाष्य सहित संपादित बे. रामचन्द्र शर्मा, केन्द्रीय संस्कृत विद्यापीठ, तिरुपति १९६५ ई.।

**सा.** = सामविधानब्राह्मण, सायण-भाष्य सहित, संपादित ए. सी. बर्नेल (Burnell, A. C.), लंडन (London), १८७३ ई.।

——— सायण तथा भरतस्वामी भाष्य सहित, संपादित बे. रामचन्द्र शर्मा, केन्द्रीयसंस्कृत विद्यापीठ, तिरुपति, १९६४ ई.।

——— सायण-भाष्य तथा बंगला अनुवाद सहित, संपादित सत्यव्रत सामश्रमी कलिकाता, १८९५ ई.।

# अ

**अ-**

अ इति ब्रह्म । ऐआ २,३,८ ।

**अ-कार-**

१. अकारो वै सर्वा वाक् । ऐआ २,३,६ ।

२. तस्यैतस्य (अक्षरसमाम्नायस्य) अकारो रसः । ऐआ ३, २, ३; शांआ ८, ३ ।

**अंश-**

एतौ (अंशं च भगं च) यज्ञेन यजन्तेऽꣳशप्राशोऽꣳशस्य भागधेयं जनं भगोऽगच्छत् । मै १,६,१२ ।

**अंशु-**

१. अꣳशुर्वै नाम ग्रहः स प्रजापतिः । माश ४, १,१,२ ।

२. पशवोऽꣳशवः । काठ २६,२; २७,६; क ४०, ५; ४२,६ ।

३. प्रजा (+ वा [मै ४,५,४; काठ २४,५; क ३७,६.]) अꣳशवः । मै ३, ७, ४; काठ २६,१०; क ४१, ८ ।

४. प्रजापतिर्वा एष यदꣳशुः सोऽस्य (यजमानस्य) एष आत्मैव । माश ४,६,१,१;११,५,९,१ ।

५. प्राण एवाꣳशुरुदानोऽदाभ्यश्चक्षुरेवाꣳशुः श्रोत्रमदाभ्यः । माश ११,५,९,२ ।

६. प्राणा वा अꣳशवः । तैसं ६,४,४,४; मै ४,५,५ ।

७. मनो ह वाऽअꣳशुः । माश ११,५,९,२ ।

**अंस-**

अश्विना अꣳसाभ्याम् (प्रीणामि) । मै ३, १५,३ ।

**अंहस्-**

१. अꣳहसा वा एष गृहीतो य आमयावी । काठ १०, ९ ।

२. उभे चैनं द्यावापृथिवीऽअꣳहसस्पातामित्युभे चैनं द्यावापृथिवी आर्त्तेर्गोपायतामित्येवैतदाह । माश १, ९,१,२० ।

३. एषेन्द्रस्य भिषज्या तनूर्याऽꣳहोमुगिन्द्रोऽꣳहसो मोक्ता । काठ १०, ९ ।

४. पाप्मा वा अꣳहः । तै २,२,७,४ ।

**अकूध्रीची-**

प्राणो वा अकूध्रीच्यः । कौ ८,५ ।

**अकूपार-**

१. अकूपाराऽऽङ्गिरस्यासीत्तस्या यथा गोधायास्त्वगेवं त्वगासीत्तामेतेन त्रिः साम्नेन्द्रः पूत्वा

सूर्य्यंत्व चसमकरोत्तद्वाव सा तर्ह्यकामयत यत्कामा एतेन साम्ना स्तुवते स एभ्यः कामः समृध्यते । तां ९, २,१४ ।

२. अकूपारो वा एतेन कश्यपो जेमानम्महिमानमगच्छज्जेमानम्महिमानं गच्छत्याकूपारेण तुष्टुवानः । तां १५,५,३० ।

३. अकूपारो वै कश्यपः कलिभिः सह समुद्रमभ्यवैषत् तस्मिन् प्रतिष्ठामैच्छत् स एतत् सामापश्यत् तेनास्तुत । जै ३, २७३ ।

४. नाक्रो मकरः पुलीकयस्तेऽकूपारस्य । मै ३,१४,१६ ।

**आकूपार-**

आ तू न इन्द्र क्षुमन्तमित्याकूपारम् । तां ९,२,१३ ।

**अकृष्टपच्य-**

तत् सोमोऽभ्यार्तीयत । मम वा एतद्यदकृष्टपच्यम् इति । काठ १०,११ ।

**१अक्ष-**

अक्षाः (अक्षीणि) परिधयः । मै ४,५,९ ।

**२अक्ष[1]-**

त्रया वै नैर्ऋताः, अक्षाः स्त्रियः स्वप्नः । मै ३,६,३ ।

**अक्षर-**

१. अक्षरेणैव यज्ञस्य छिद्रमपिदधाति । तां ८,६,१३ ।

२. कतमत्तदक्षरमिति । यत् क्षरन्नाऽक्षीयतेति । इन्द्र इति । जैउ १,१४,२,८ ।

३. तद्यदक्षरत्तस्मादक्षरम् । माश ६,१,३,६ ।

४. त्रीणि षष्टिशतान्यक्षराणां त्रीणि षष्टिशतान्यूष्मणां त्रीणि षष्टिशतानि संधीनाम् । यान्यक्षराण्यवोचामाहानि तानि यानूष्मणोऽवोचाम रात्रयस्ता यान् संधीनवोचामाहोरात्राणां ते संधय इत्यधिदैवतम् । अथाध्यात्मम् । यान्यक्षराण्यधिदैवतमवोचामास्थीनि तान्यध्यात्मं यानूष्मणोऽधिदैवतमवोचाम मज्जानस्तेऽध्यात्मम् । ऐआ ३,२,२-४ ।

५. यदक्षरदेव तस्मादक्षरम् । जैउ १,७,२,१ ।

६. यद्वेवाचरं नाक्षीयत तस्मादक्षयम् । अक्षयं ह वै नामैतत् । तदक्षरमिति परोक्षमाचक्षते । जैउ १,७,२,२ ।

७. विराजो वा एतद्रूपं यदक्षरम् । तां ८, ६,१४ ।

८. स (प्राणः) यदेभ्यः सर्वेभ्यो भूतेभ्यः क्षरति, न चैनमतिक्षरन्ति तस्मादक्षरम् । ऐआ २,२,२ ।

**अक्षर-पङ्क्ति-**

१. असौ वै (द्यु-)लोकोऽक्षरपङ्क्तिश्छन्दः । माश ८,५,२,४ ।

२. पशवो वा (प्राणापानौ वा) अक्षरपङ्क्तयः । कौ १६,८ ।

३. सुमत्पद्वग्द[2] इत्येष वै यज्ञोऽक्षरपङ्क्तिः । ऐ २,२४ ।

---

१. दयूतसाधन- । २. सु, मत्, पत्, वक्, दे इति पञ्चाक्षराणां समूहः ।

अक्षर-रूप-

मासं लोहितमित्येतच्चतुर्थमक्षररूपम्। शांआ ८,१।

अक्षर-समाम्नाय-

छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव, तस्यैतस्याकारो रसः। ऐआ ३,२,३; शांआ ८,३।

अक्षर्या (विराज्)-

अक्षर्यया ऋषयोनुप्राजानन् (स्वर्गं लोकम्)। तां ८,५,७।

अक्षावाप-

१. अक्षावापस्य च गृहेभ्यो गोविकर्तस्य च गवेधुकाः सम्भृत्य सूयमानस्य गृहे रौद्रं गावेधुकं चरुं निर्वपति। माश ५,३,१,१०।

२. रौद्रं गावीधुकं चरुम् (+अक्षावापस्य गृहे, शबल उद्वारो दक्षिणा [तैसं १,८,९,२])। तैसं १,८,७,१।

३. रौद्रो गावीधुकश्चरुरक्षावापस्य गृहे गोविकर्तस्य च (+चासिर्वालापितस्थो दक्षिणा शबलो वा त्रिवत्सोऽभिधानी वा केसरपाशा [मै २,६,५])। मै ४,३,८।

अक्षि-

१. तस्यैतन्मिथुनं योऽयᳪ सव्येऽक्षन्पुरुषः। माश १०,५,२,८।

२. यदेतन्मण्डलं तपति यश्चैषं रुक्म इदं तच्छुक्लमक्षन्नथ यदेतदर्चिर्दीप्यते यच्चैतत्पुष्कर-पर्णमिदं तत्कृष्णमक्षन्नथ य एष एतस्मिन्मण्डले पुरुषो यश्चैष हिरण्मयः पुरुषोऽयमेव स योऽयं दक्षिणेऽक्षन्पुरुषः। माश १०,५,२,७।

३. स एष एवेन्द्रः। योऽयं दक्षिणेऽक्षन् पुरुषोऽथेयमिन्द्राणी। माश १०,५,२,९।

अक्षिति-

१. अक्षितिरसि मा मे क्षेष्ठाः। काठ ५,४।

२. आपोऽक्षितिर्या इमा एषु लोकेषु याश्चेमा अध्यात्मम्। कौ ७,४।

३. पुरुषो वाऽक्षितिः। माश १४,४,३,७।

४. श्रद्धैव सकृदिष्टस्याक्षितिः स यः श्रद्दधानो यजते तस्येष्टं न क्षीयते। कौ ७,४।

अगस्ति-

तस्माद्वगस्तयो (अगस्त्यगोत्रोत्पन्नाः) बहिर्धेव कुरुपाञ्चालेभ्यः। जै २,२२०।

अगस्त्य-

१. अगस्त्यस्य विष्टयकर्ण्यः। मै ४,२,९।

२. तदु वाव अगस्त्यः पश्चेवानुबुबुध ऋषयो ह वा इमे प्रजा अस्मिँल्लोके विधाय स्वर्गं लोकमगमन्निति, सोऽकामयताहमपि प्रजामस्मिँल्लोके विधाय स्वर्गं लोकमनुगच्छेयमिति स एतं षोडशं स्तोममपश्यत्तमाहरत्तेनायजत। जै २, २२०।

अग्नि-

१. अग्न आयुःकारायुष्माᳪस्त्वं तेजस्वान् देवेष्वेध्यायुष्मन्तं मां तेजस्वन्तं मनुष्येषु कुरु। मै ४,७,३।

२. अग्न आयूꣳषि पवसे । तैसं १,६,६,२ ।
३. अग्नय आयुष्मते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत सर्वमायुरियामिति । तैसं २,२,३,२ ।
४. अग्नयेऽँहोमुचेऽष्टाकपालः (पुरोडाशः) । काठ ४५, १८ ।
५. अग्नये कव्यवाहनाय मन्थः । काठ ९,६; क ८,९ ।
६. अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेत् । तैसं २,२,३,१ ।
७. अग्नये कुटरूनालभते । मै ३,१४,४ ।
८. अग्नये क्षमवतेऽष्टाकपालं निर्वपेद् यर्ह्ययं (अग्निः) देवः प्रजा अभिमन्येत । काठ १०,७ ।
९. अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत् संग्रामे संयत्ते । तैसं २,२,२,४ ।
१०. अग्नये गायत्राय त्रिवृते राथन्तराय वासन्तायाष्टाकपालः (वासन्तिकाय पुरोडाशमष्टाकपालं निर्वपति [मै.]) मै ३,१५,१०; काठ ४५,१० ।
११. अग्नये गृहपतय आपतन्तानामष्टाकपालं (चरुं) निर्वपेत् । मै २,६,६ ।
१२. अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम् । तैसं १,८,१०,१ ।
१३. अग्नये चैव सायं (जुहोमि), प्रजापतये च । काठ ६,६ ।
१४. अग्नये जातवेदसे पुरोडाशमष्टाकपालं निर्वपेद् भूतिकामः । तैसं २,२,३,३ ।
१५. अग्नये ज्योतिष्मतेऽष्टाकपालं (पुरोडाशं) निर्वपेत् । मै १,८,८ ।
१६. अग्नये तेजस्विनेऽजं कृष्णग्रीवमालभते । काठ १३,१३ ।
१७. अग्नये त्वा तेजस्वत एष ते योनिः । तैसं १,४,२९,१; काठ ४,११; क ३,९ ।
१८. अग्नये त्वाऽऽयुष्मत एष ते योनिः । मै १,३,३१ ।
१९. अग्नये त्वा वसुमते स्वाहा । मै ४,९,८ ।
२०. अग्नये नमो गायत्र्यै नमस्त्रिवृते नमो रथन्तराय नमो वसन्ताय नमः प्राच्यै दिशे नमः प्राणाय नमो वसुभ्यो नमः । काठ ५१,१ ।
२१. अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता । तैसं १,८,४,१ ।
२२. अग्नयेऽनीकवते रोहिताञ्जिरनड्वान् । काठ ४८,३ ।
२३. अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत् । तैसं २,२,२,१ ।
२४. अग्नये पथिकृतेऽष्टाकपालं निर्वपेद्यस्य पौर्णमासी वामावस्या वातिपद्येत । काठ १०,५ ।
२५. अग्नये यविष्ठाय त्रयो नकुलाः । काठ ४९,५ ।
२६. अग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेत् स्पर्धमानः क्षेत्रे वा सजातेषु वाग्निमेव यविष्ठꣳ स्वेन भागधेयेनोपधावति तेनैवेन्द्रियं वीर्यं भ्रातृव्यस्य युवते । तैसं २,२,३,१-२ ।
२७. अग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेदभिचर्यमाणः स (अग्निः) एवास्माद्रक्षाꣳसि यवयति, नैनमभिचरन्स्तृणुते । तैसं २,२, ३,२ ।
२८. अग्नये रक्षोघ्ने स्वाहा । तैसं १,८,७,२ ।
२९. अग्नये रसवतेऽजक्षीरे चरुं निर्वपेद्यः कामयेत रसवान्त्स्यामिति । तैसं २,२,४,४ ।
३०. अग्नये रुक्मते पुरोडाशमष्टाकपालं निर्वपेद्रुक्कामः । तैसं २,२,३,३ ।
३१. अग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत वसुमान्त्स्यामिति । तैसं २,२,४,५ ।
३२. अग्नये वाजसृते पुरोडाशमष्टाकपालं निर्वपेत् संग्रामे संयत्ते । तैसं २,२,४,५ ।

३३. अग्नये वैश्वानराय द्वादशकपालः (पुरोडाशः)। तैसं ७,५,२२,१; मै ३,१,१०; काठ ४५,१०।
३४. अग्नये वैश्वानराय द्वादशकपालं (पुरोडाशं) निर्वपेत् (+योऽनन्नमद्यात् ⌊काठ.⌋)। मै १,४,१३; काठ १०,३।
३५. अग्नये वैश्वानराय द्वादशकपालमामयाविनं याजयेत्। मै २,३,५।
३६. अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्नव्रत्यमिव चरेत्। तैसं २,२,२,१-२।
३७. अग्नये साहन्त्याय पुरोडाशमष्टाकपालं निर्वपेत् सीक्षमाणः। तैसं २,२,३,४।
३८. अग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन्, यो वा बिभीयात्। तैसं २,२,२,३-४।
३९. अग्नये हिरण्यम् (+अनयन् ⌊मै.⌋; तेनामृतत्वमश्याम् ⌊तैआ.⌋)। मै १,९,४; काठ ९,९; क ८,१२; तैआ ३,१०,१।
४०. अग्नयो वै छन्दांसि। तैसं ५,७,९,३।
४१. अग्निं यजतेत्यब्रवीत् तेन दक्षिणां (दिशं प्रज्ञास्यथ)। काठ २३,८।
४२. अग्निंया गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु। मै २,१३,१।
४३ अग्निं वा एतस्य (आमयाविनः) शरीरं गच्छति। तैसं २,३,११,१।
४४. अग्निं वै जातं रक्षांस्यधूर्वंस्तान्येनमभिसमलभन्त, तान्यश्वेनापाहत। काठ ८,५।
४५. अग्निं वै पशवः प्रविशन्त्यग्निः पशून्। मै १,८,२।
४६. अग्निं वै पशवोऽनुप्रजायन्ते। काठ ३६,२।
४७. अग्निं वै पशवोऽनूपतिष्ठन्ते पशूनग्निः। काठ ६,२।
४८. अग्निं वै पुरुषस्य प्रमीतस्य मांसानि गच्छन्ति। काठ ११,८।
४९. अग्निं वै वरुणानीरभ्यकामयन्त तास्समभवद्, आपो वरुणानीर्, यदग्ने रेतोऽसिच्यत तद्धरितम् (सुवर्णम्) अभवत्। काठ ८,५।
५०. अग्निं वै विभाजं नाशक्नुवंस्तमश्वेन व्यभजन्। काठ ८,५।
५१. अग्निं वैश्वानरं गच्छ स्वाहेत्याह, प्रजा एव प्रजाता अस्यां (पृथिव्यां) प्रतिष्ठापयति। तैसं ६,४,१,४।
५२. अग्निं वै सृष्टं प्रजापतिस्तंशम्याग्ने समैन्द्ध। काठ ८,२।
५३. अग्निंशरीरम् (गच्छति ज्योगामयाविनः)। तैसं २,२,१०,४।
५४. अग्निंसमुद्रवाससम् (हुवे)। काठ ४०,१४ (तु. ऋ ८,१०२,४)।
५५. अग्निंहृदयेन (प्रीणामि)। तैसं १,४,३६,१; तैआ ३,२१,१।
५६. अग्निः पञ्च (+होतॄणां ⌊तै २,३,५,६⌋) होता। तै २,३,१,१।
५७. अग्निः पृथिव्याः (उदैत्)। जै १,३५७।
५८. अग्निः पृथिव्याम् (उपदधातु)। तैआ १,२०,२।
५९. अग्निः प्रजननम्। गो १,२,१५।
६०. अग्निः (+प्रजानां ⌊तै.⌋) प्रजनयिता। काठ ६,७; २७,८; क ६,५; तै १,७,२,३।
६१. अग्निः प्रजापतिः। काठ २२,७; १०।
६२. अग्निः प्रथम इज्यते। मै ३,८,१।

६३. अग्निः प्रथमो वसुभिर्नो अव्यात् । तैसं २,१,११,२; मै ४,१२,२; काठ १०,१२ ।
६४. अग्निः प्रवापयिता (प्रस्तावः [जैउ.]) । क ४,४; जैउ १,११,१,५ ।
६५. अग्निः प्रस्तोता (प्रातः सवनम् [तैआ.]) । तैसं ३, ३,२,१; तैआ ५,१, ६ ।
६६. अग्निं खलु वै पशवोऽनूपतिष्ठन्ते । तैसं ५, ७, ९, २ ।
६७. अग्निना तपोऽन्वाभवत् । काठ ३५, १५; ४३, ४; क ४८, १३ ।
६८. अग्निना दक्षिणा (प्राजानन्) । तैसं ६,१,५,२ ।
६९. अग्निनानीकेन स वृत्रमभीत्य······अतिष्ठत् । काठ ३६,८ ।
७०. अग्निना वा अनीकेनेन्द्रो वृत्रमहन् । मै १,१०,५;३,९,५; काठ ३५,२०; क ४८,१८ ।
७१. अग्निना वा अयं लोको ज्योतिष्मान् । जै १,२३२ ।
७२. अग्निना विश्वाषाट् (यज्ञं दाधार) । तैसं ४, ४, ८, १ ।
७३. अग्निना वै देवा अन्नमदन्ति । काठ ८, ४ ।
७४. अग्निना वै मुखेन देवा असुरानुक्थेभ्यो निर्जघ्नुः । ऐ ६, १४ ।
७५. अग्निं देवतानां दीक्षमाणा अनुनिषीदन्त्यादित्यमनूत्तिष्ठन्तीति । जै २, २२ ।
७६. अग्निं देवतानां प्रथमं यजेत् । क ४८, १६ ।
७७. अग्निं देवताम् (प्रजापतिः शीर्षत एव मुखतः असृजत) । जै १, ६८ ।
७८. अग्निमतिथिं जनानाम् । तै २, ४, ३, ६ ।
७९. अग्निमुपदिशन् वाचायमर्क इति । जै १, २५ ।
८०. अग्निमुपदिशन् वाचेदं यश इति···°चेदं सत्यमिति । जै १,२३ ।
८१. अग्निमुपदिशन् वाचेयमितिरिति । जै १, २५ ।
८२. अग्निमेवास्यै (पृथिव्यै वत्सं प्रजापतिः) प्रायच्छत् । जै ३, १०७ ।
८३. अग्निमेवेतरेण (बल-प्राण-ब्रह्मवर्चस-व्यतिरिक्तेन) सर्वेण (अवकीर्णः प्रविशति) । जै १, ३६२ ।
८४. अग्निमेवोपद्रष्टारं कृत्वान्तं प्राणस्य गच्छन्ति । मै १, १०, १९ ।
८५. अग्निरजरोऽभवत् सहोभिर्यदेनं द्यौरजनयत् सुरेताः । मै २, ७, ८ ।
८६. अग्निरनीकम् (उपसद्देवतारूपाया इषोः) । ऐ १, २५ ।
८७. अग्निरन्नस्यान्नपतिः (°ग्निरन्नादोऽन्न° [तै.]) । काठ ५, १; तै २, ५, ७, ३ ।
८८. अग्निरन्नाद्यस्य प्रदाता । तां १७, ९, २ ।
८९. अग्निरमुष्मिँल्लोक आसीद्यमोऽस्मिन् (पृथिवीलोके) ते देवा अब्रुवन्नेतेमौ विपर्यूहामेत्यन्नाद्येन देवा अग्निमुपामन्त्रयन्त, राज्येन पितरो यमं तस्मादग्निर्देवानामन्नादो यमः पितृणा९ राजा । तैसं २, ६, ६, ४-५ ।
९०. अग्निरमृतो (अग्निरजिरो [मै.]) अभवत् सहोभिर्यदेनं द्यौरजनयत् सुरेताः । मै २, ७, ८; काठ १६, ९ ।
९१. अग्निरवमो देवतानां विष्णुः परमः । तैसं ५, ५, १, ४ ।
९२. अग्निरसि पृथिव्या९ श्रितः । अन्तरिक्षस्य प्रतिष्ठा । तै ३, ११, १, ७ ।
९३. अग्निराग्नीध्रे (सोमः) । तैसं ४, ४, ९, १ ।
९४. अग्निरायुष्मान्स वनस्पतिभिरायुष्मान् । तैसं २,३,१०,३; काठ ११,७ ।
९५. अग्निरायुस्तस्य मनुष्या आयुष्कृतः । मै २, ३, ४ ।

९६. अग्निरित ऊर्ध्वो भाति । काठ २९, ७ ।

९७. अग्निरिवानाधृष्यः भूयासम् । ऐआ ५, १, १ ।

९८. अग्निरु देवानां प्राणः । माश १०, १, ४, १२ ।

९९. अग्निरु वै ब्रह्म (यज्ञः [माश ५,२,३,६]) । माश ८,५,१,१२ ।

१००. अग्निरु सर्वे कामाः । माश १०, २, ४, १ ।

१०१. अग्निरु सर्वेषां पाप्मनामपहन्ता । माश ७, ३, २, १६ ।

१०२. अग्निर् ऋषिः । मै १,६,१ ।

१०३. अग्निरेकाक्षरया मामुदजयदिमां पृथिवीम् । काठ १४,४ ।

१०४. अग्निरेकाक्षरया (°क्षरेण [तैसं.]) वाचमुदजयत् । तैसं १, ७, ११,१; मै १, ११, १०; काठ १४,४ ।

१०५. अग्निरेकाक्षरयोदजयन्मामिमां पृथिवीम् । मै १,११,१० ।

१०६. अग्निरेव दध्यङ्ङाथर्वणः । तैसं ५,६,६,३ ।

१०७. अग्निरेव देवानां दूत आस । माश ३,५,१,२१ ।

१०८. अग्निरेव पुरः । माश १०,३,५,३ ।

१०९. अग्निरेव प्रावापयत् सोमो (+वै [मै.]) रेतोऽदधान् मिथुनं वा अग्निश्च सोमश्च । मै १,१०, ५; काठ ३५,२०; क ४८,१८ ।

११०. अग्निरेव ब्रह्म (भर्गः [गो.]) । गो १,५,१५; माश १०,४,१,५ ।

१११. अग्निरेव रथन्तरस्य (अधिपतिः) । जै १,२९२ ।

११२. अग्निरेव सविता । गो १,१,३३; जैउ ४,१२,१,१ ।

११३. अग्निरेवावमो मृत्युः । तैआ १,८,४,११ ।

११४. अग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्रयच्छति । तैसं २,५,५,२ ।

११५. अग्निरेवैनं गार्हपत्येनावति । तै १,७,६,६ ।

११६. अग्निरेवैनं गृहपतीनां सुवते । तै १,७,४,१ ।

११७. अग्निरेवैष यत् त्रिवृत् स्तोमः । जै २,९० ।

११८. अग्निरेष यत्पशवः (यद्रथन्तरम् [जै.]) । जै १,३३०;३३२; माश ६,३,२,६ ।

११९. अग्निर्गायत्रछन्दाः । काठ ९,१३ ।

१२०. अग्निर्गार्हपत्यानाम् (°र्गृहपतीनाम् [तैसं.]) (देवः) । तैसं १,८,१०,१; काठ १५,५ ।

१२१. अग्निर्गृहपतिः । तैसं २,४,५,२ ।

१२२. अग्निर्ज्योतिर्ज्योतिरग्निरिति तदिमं लोकं लोकानामाप्नोति प्रातःसवनं यज्ञस्य । कौ १४,१ ।

१२३. अग्निर्दीक्षितः, पृथिवी दीक्षा। जै २,५३।

१२४. अग्निर्देवता गायत्री छन्द उपांशोः पात्रमसि। तैसं ३,१,६,२।

१२५. अग्निर्देवतानां ज्योतिः। जै १,६६।

१२६. अग्निर्देवतानाम् (मुखम्)। मै १,६,९; तां ४,८,१०।

१२७. अग्निर्देवानां रक्षोहा (वसुमान् [काठ १०,६])। काठ १०,५; काठसंक १२।

१२८. अग्निर्देवानां क्षमवाँस्तमेव भागधेयेनोपधावति, सोऽस्मै प्रीतः क्षमत एव। काठ १०,७।

१२९. अग्निर्देवानां जठरम् (ॅनां दूत आसीत् [तैसं.])। तैसं २,५,११,८। तै २,७,१२,३।

१३०. अग्निर्देवानामभवत् पुरोगाः। काठ १६,२०।

१३१. अग्निर्देवेभ्य उदक्रामत्स मुञ्जं (वेणुं [माश ६,३,१,३१] प्राविशत्तस्मात्स सुषिरः। माश ६, ३,१,२६।

१३२. अग्निर्देवेभ्यो निलायत, अश्वो रूपं कृत्वा सोऽश्वत्थे संवत्सरमतिष्ठत्। तै १,१,३,९।

१३३. अग्निर्देवेभ्यो निलायत, आखुरूपं कृत्वा स पृथिवीं प्राविशत्। तै १,१,३,३।

१३४. अग्निर्देवेभ्यो निलायत, स क्रमुकं प्राविशत्। तैसं ५,१,९,५।

१३५. अग्निर्देवेभ्यो निलायत, स दिशोऽनुप्राविशज्जुह्वन्मनसा दिशो ध्यायेद् दिग्भ्य एवैनमवरुन्धे। तैसं ५,४,७,६।

१३६. अग्निर्देवेभ्यो निलायत, स वेणुं प्राविशत्, स एतामूतिमनुसमचरद् यद् वेणोः सुषिरम्। तैसं ५,१,१,४।

१३७. अग्निर्द्विहोता, स भर्ता। तैआ ३,७,१,२।

१३८. अग्निर्नेता स वृत्रहेति वार्त्रघ्नमिन्द्ररूपम्। ऐआ १,२,१।

१३९. अग्निर्ब्रह्म (+अग्निर्यज्ञः [माश.])। काठ ८,४; माश ३,२,२,७।

१४०. अग्निर्भूतानामधिपतिः। तैसं ३,४,५,१।

१४१. अग्निर्मुखम् (+प्रथमो देवतानांसंगतानामुत्तमो विष्णुरासीत् [काठ.])। तैसं ७,५,२५,१; काठ ४,१६।

१४२. अग्निर्मे दुरिष्टात् पातु। तैसं १,६,३,१।

१४३. अग्निर्मे वाचि श्रितः। तै ३,१०,८,४।

१४४. अग्निर्मे होता। ष २,५।

१४५. अग्निर्यजुर्भिः (सहागच्छतु)। मै १,९,२;८; काठ ९,१०; क ४८,१; तैआ ३,८,१।

१४६. अग्निर्यजुषाम् (समुद्रः)। माश ९,५,२,१२।

१४७. अग्निर्वसुभिः (+उदक्रामत् [ऐ.])। मै २,२,६; ऐ १,२४।

१४८. अग्निर्वा अग्रे हिरण्यमविन्दत्। मै २,२,७।

१४९. अग्निर्वा अन्नपतिः (अन्नादः ⌊ऐआ.⌋)। तैसं ५,२,२,१; ऐआ १,१,२।

१५०. अग्निर्वा अन्नानां शमयिता। कौ ६,१४।

१५१. अग्निर्वा अपामायतनम्……आपो वा अग्नेरायतनम्। तैआ १,२२,१-२।

१५२. अग्निर्वा अरुषः (अर्वा ⌊तै १,३,६,४⌋)। तै ३,९,४,१।

१५३. अग्निर्वाऽअर्कः। माश २,५,१,४; १०,६,२,५; ऐआ १,४,१।

१५४. अग्निर्वा अश्वमेधस्य योनिरायतनम्। तै ३,९,२१,२; ३।

१५५. अग्निर्वा अश्वं प्राविशत् कृष्णो भूत्वा सोऽत्रागच्छयत्रैष मृगशफ इव। काठ ८,५।

१५६. अग्निर्वाऽअहः सोमो रात्रिः। माश ३,४,४,१५।

१५७. अग्निर्वाऽआयुः। माश ६,७,३,७; ७,२,१,१५।

१५८. अग्निर्वाऽआयुष्मानायुष ईष्टे। माश १३,८,४,८।

१५९. अग्निर्वा इतो वृष्टिमीट्टे मरुतोऽमुतश्च्यावयन्ति (+तां सूर्यो रश्मिभिर्वर्षति ⌊मै २,४,८⌋) एते वृष्ट्याः प्रदातारः। मै २,१,८।

१६०. अग्निर्वा इतो वृष्टिमुदीरयति। तैसं २,४,१०,२।

१६१. अग्निर्वा उपद्रष्टा (ऋतम् ⌊तै.⌋)। तैसं ३,३,८,५;७,५,४; तै २,१,११,१; गो २,४,९।

१६२. अग्निर्वा एतासाꣳ(गवां) योनिरग्निः कुलायम्। मै ४,२,१०।

१६३. अग्निर्वाऽएव धुर्यः। माश १,१,२,१०।

१६४. अग्निर्वा एष वैश्वानरो यद् यज्ञः (यद् यज्ञायज्ञीयम् ⌊जै १,१७३⌋)। जै १,१७०।

१६५. अग्निर्वाग् भूत्वा मुखं प्राविशत्। ऐआ २,४,२; ऐउ १,२,४।

१६६. अग्निर्वाचि (हुतः)। शांआ १०,१।

१६७. अग्निर्वाव देवयजनम् (+अग्नौ हि सर्वा देवता इज्यन्ते ⌊काठ.⌋)। मै ३,८,४; काठ २५,३; क ३८,६।

१६८. अग्निर्वाव पवित्रम् (पुरोहितः ⌊ऐ.⌋)। तै ३,३,७,१०; ऐ ८,२७।

१६९. अग्निर्वाव यमः (+इयं यमी ⌊तैसं.⌋)। तैसं ३,३,८,३; गो २,४,८।

१७०. अग्निर्वाव वाजी। तैसं ५,५,१०,७।

१७१. अग्निर्विजयमुपयत्सु त्रेधा तन्वो विन्यधत्त पशुषु तृतीयमप्सु तृतीयममुष्मिन्नादित्ये तृतीयम्। का ७,३।

१७२. अग्निर्विभ्राष्टिवसनः। तैआ १,१२,३,७।

१७३. अग्निर्वृत्राणि जङ्घनत्। काठ २०,१४।

१७४. अग्निर्वै कामो देवानामीश्वरः। कौ १९,२।

१७५. अग्निर्वै गायत्री (घर्मः ⌊माश ११,६,२,२⌋)। माश ३,४,१,१९; ९,४,१०;६,६,२,७।

१७६. अग्निर्वै ज्योती रक्षोहा । माश ७,४,१,३४ ।

१७७. अग्निर्वै तत् पक्षी भूत्वा स्वर्गं लोकमपतत् । काठ २१,४; क ३१,१९ ।

१७८. अग्निर्वै त्रिवृत् (दर्भस्तम्बः ⌊काठ.⌋) । काठ ९,१६; जै १,२४०; तै १,५,१०,४ ।

१७९. अग्निर्वै दाता (+स एवास्मै यज्ञं ददाति ⌊कौ.⌋) । कौ ४,२; माश ५,२,५,२ ।

१८०. अग्निर्वै दीक्षितः । काठ २३,६; २४,९ ।

१८१. अग्निर्वै दीक्षितस्य देवता । तैसं ३,१,१,३ ।

१८२. अग्निर्वै देवतानामनीकं सेनाया वै सेनानीरनीकं, तस्मादग्नयेऽनीकवते (पुरोडाशं निर्वपति) । माश ५,३,१,१ ।

१८३. अग्निर्वै देवतानां मुखं प्रजनयिता स प्रजापतिः । माश २,५,१,८;३,९,१,६ ।

१८४. अग्निर्वै देवयोनिः । ऐ १,२२;२,३ ।

१८५. अग्निर्वै देवानां यष्टा (रक्षोहा ⌊मै.⌋) । मै २,१,११; तै ३,३,७,६ ।

१८६. अग्निर्वै देवानां वसिष्ठः ( सेनानी ⌊मै.⌋) । मै १,१०,१४; ऐ १,२८ ।

१८७. अग्निर्वै देवानां व्रतपतिः (व्रतभृत् ⌊गो २,१,१५⌋) । तैसं १,६, ७, २; मै १,८,९; ३,६,९; काठ ३२,६; माश १, १,१,२;३,२,२,२२; गो २,१,१४ ।

१८८. अग्निर्वै देवानां होता (गोपाः ⌊ऐ १,२८⌋) । ऐ १,२८;३,१४ ।

१८९. अग्निर्वै देवानां नेदिष्टम् । माश १,६,२,११ ।

१९०. अग्निर्वै देवानामद्धातमाम् । माश १,६,२,९ ।

१९१. अग्निर्वै देवानामन्नपतिः (°नामन्नवान् ⌊मै.; काठ १०,६⌋) । मै २,१,१०; काठ १०,६ ।

१९२. अग्निर्वै देवानामन्नादः (°नामभिषिक्तः ⌊तैसं.⌋) । तैसं ५,४,९,२; काठ १०,६; तै ३,१,४,१ ।

१९३. अग्निर्वै देवानामवमो विष्णुः परमः । काठ २२,१३; ऐ १, १ ।

१९४. अग्निर्वै देवानामवरार्ध्यो विष्णुः परार्ध्यः । कौ ७,१ ।

१९५. अग्निर्वै देवानां पथिकृत् (मनोता ⌊ऐ., कौ.⌋) । मै १,८,९; २,१,१; ऐ २,१०; कौ १०,६ ।

१९६. अग्निर्वै देवानां मुखम् (ब्रह्मा ⌊जै.⌋) । कौ ३,६; ५,५; गो २,१,२३; जै १,९३; तां ६,१,६ ।

१९७. अग्निर्वै देवानां मृदुहृदयतमः । माश १,६,२,१० ।

१९८. अग्निर्वै देवेभ्योऽपाक्रामत् स प्रत्यङ्ङुदद्रवत् तस्मादध्वर्युः प्रत्यङ्मुखोऽग्निं मन्थति । काठसंक २० ।

१९९. अग्निर्वै द्रष्टा (धाता ⌊तै.⌋) । काठसंक १२२; गो २,२,१९; तै ३,३,१०,२ ।

२००. अग्निर्वै नभसस्पतिः (नभसा पुरः ⌊तैसं.⌋) । तैसं ३,३,८,६; गो २,४,९ ।

२०१. अग्निर्वै पथः कर्ता (पथिकृत् ⌊कौ.⌋) । कौ ४,३; माश ११,१,५,६ ।

२०२. अग्निर्वै पथिकृद् देवतानां येन वै केन चाग्निरेति पन्थानमेव कुर्वन्नेति । जै १, ३०३ ।

२०३. अग्निर्वै पथोऽतिवोढा । माश १३,८,४,६ ।

२०४. अग्निर्वै परिक्षित् । ऐ ६,३२; गो २,६,१२ ।

२०५. अग्निर्वै पशूनाᳬ योनिः (पशूनामीष्टे [माश.]) । मै २,५,९; माश ४,३,४,११ ।

२०६. अग्निर्वै पाप्मनोऽपहन्ता । माश २,३,३,१३ ।

२०७. अग्निर्वै पुरस्तद्यत्तमाह पुरः इति प्राञ्चᳬ ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्ति । माश ८, १,१,४ ।

२०८. अग्निर्वै प्रजापतिः (+ तस्याश्वश्चक्षुः [काठ.]) । मै ३,४,६; काठ ८,५ ।

२०९. अग्निर्वै प्रथमा विश्वज्योतिः (इष्टका) । माश ७,४,२, २५ ।

२१०. अग्निर्वै प्राङुदेतुं नाकामयत तमश्वेनोदवहन्यत् पूर्वमुदवहँस्तत् पूर्ववाहः पूर्ववाट्त्वम् । काठ ८,५ ।

२११. अग्निर्वै बृहद्रथन्तरे (°वैभ्रजश्छन्दः [माश.]) । जै १,३२७; माश ८,५,२,५ ।

२१२. अग्निर्वै ब्राह्मणः (ब्रह्मा [ष.]) । काठ ६,६; काठसंक ८३; ष १,१ ।

२१३. अग्निर्वै भरतः स वै देवेभ्यो हव्यं भरति । कौ ३,२ ।

२१४. अग्निर्वै भर्गः । माश १२,३,४,८; जैउ ४,१२,२,२ ।

२१५. अग्निर्वै भुवोऽग्नेर्हीदᳬ सर्वं भवति । माश ८,१,१,४ ।

२१६. अग्निर्वै मध्यमस्य दाता । मै २,२,१३ ।

२१७. अग्निर्वै मनुष्याणां चक्षुषः (°आयुषः [मै २,३,५]) प्रदाता । मै २,१,७ ।

२१८. अग्निर्वै महान् (महिषः [माश.]) । माश ७,३,१, २३;३४; शांआ १,५; जैउ ३,१,४,७ ।

२१९. अग्निर्वै मिथुनस्य कर्त्ता प्रजनयिता । माश ३,४,३,४ ।

२२०. अग्निर्वै मृत्युः (यज्ञमुखम् [तै.]) । माश १४,६,२,१०; कौ १३,३; जै १,३३२; तै १,६,१,८ ।

२२१. अग्निर्वै यज्ञः (यज्ञस्य पवित्रम् । [मै.]) । मै ३,६,१; तां ११,५,२; माश ३,४,३,१९ ।

२२२. अग्निर्वै यज्ञस्यान्तोऽवस्ताद् , विष्णुः परस्तात् (पुरस्तात् [मै ३, ६,१]) । मै ४,३,१ ।

२२३. अग्निर्वै यज्ञस्यावरार्ध्यो विष्णुः परार्ध्यः । माश ३,१,३,१; ५,२,३,६ ।

२२४. अग्निर्वै यम इयं (पृथिवी) यस्याभ्याᳬ हीदᳬ सर्वं यतम् । माश ७,२,१, १० ।

२२५. अग्निर्वै योनिर्यज्ञस्य । माश १, ५,२,११; ३,१,३,२८; ११,१,२,२ ।

२२६. अग्निर्वै रक्षसामपहन्ता । कौ ८,४;१०,३ ।

२२७. अग्निर्वै रथन्तरम् । ऐ ५,३०; जै १,३३५ ।

२२८. अग्निर्वै रात्रिरसा आदित्योऽहः । मै १,५,९ ।

२२९. अग्निर्वै रुद्रः । मै २,१,१०; काठ १०,६;२४,९; क ३५,५; माश ५,३,१,१०;६,१,३,१० ।

२३०. अग्निर्वै रूरः ( रेतोधाः [तैसं., तै.]) । तैसं ६,५,८,४; तां ७,५,१०;१२,४,२४; तै २,१,२, ११; ३,७,३,७ ।

२३१. अग्निर्वै रूरुरेतत् (रौरवं) सामापश्यत् । जै १,१२२ ।

२३२. अग्निर्वै वनस्पतिः (वयस्कृच्छन्दः [माश.]) । कौ १०,६; माश ८,५, २,६ ।

२३३. अग्निर्वै वरुणं ब्रह्मचर्यमागच्छत् प्रवसन्तं तस्य जायां समभवत् । मै १,६,१२ ।

२३४. अग्निर्वै वरुणानीरभ्यकामयत, तस्य तेजः (रेतः [काठ १९,३]) परापतत् तद्धिरण्यमभवत् । काठ ८,५; कं ३०,१ ।

२३५. अग्निर्वै वरेण्यम् (वसुः [मै.]) । मै ३,४,२; जैउ ४,१२,२,१ ।

२३६. अग्निर्वै वसुमान् (वसुवनिः [माश.]) । मै ४,१,१४; माश १,८,२,१६ ।

२३७. अग्निर्वै वाक् (विराट् [काठ.]) । काठ १८,१९; जं २,५४ ।

२३८. अग्निर्वै स देवस्तस्यैतानि नामानि शर्व इति यथा प्राच्या आचक्षते भव इति यथा वाहीकाः पशूनां पती रुद्रोऽग्निरिति तान्यस्याशान्तान्येवेतराणि नामान्यग्निरित्येव शान्ततमम् । माश १,७,३,८ ।

२३९. अग्निर्वै समिष्टिरग्निः प्रतिष्ठितिः । मै १,१०,१५ ।

२४०. अग्निर्वै सर्वा देवताः । मै १,४,१३;१४;६,८;२,१,४;३,१;५; ३,१,१०;७,८;९,७; ४,४,७; ७,८; ८,५; काठ ११,८; ऐ १,१; गो २, १,१२;१६; जै १,३४२; तां ९, ४,५; १८, १,८; माश १,६,२,८; ३,१,३,१; ष ३,७ ।

२४१. अग्निर्वै सर्वेषां देवानामात्मा । माश १४,३,२, ५ ।

२४२. अग्निर्वै स्वर्गस्य लोकस्याधिपतिः । ऐ ३,४२ ।

२४३. अग्निर्वै (°र्हि [माश.]) स्विष्टकृत् । कौ १०,५; माश १,५,३,२३ ।

२४४. अग्निर्वै हिमस्य भेषजम् । तै ३,९,५,४ ।

२४५. अग्निर्वै होता (+अधिदैवं वागध्यात्मम् [माश १२,१, १,४]) । गो १,२, २४; माश १, ४, १,२४; ६,४,२,६ ।

२४६. अग्निर्वै होता वेदिषत् । माश ६,७,३,११ ।

२४७. अग्निर्ह वाऽअपोऽभिदध्यौ मिथुन्याभिः स्यामिति ताः सम्बभूव तासु रेतः प्रासिञ्चत्तद्धिरण्यमभवत्तस्मादेतदग्निसंकाशमग्नेर्हि रेतस्तस्मादप्सु विन्दन्त्यप्सु हि (रेतः) प्रासिञ्चत् । माश २, १,१,५ ।

२४८. अग्निर्ह वा अबन्धुः । जैउ ३,२,१,७ ।

२४९. अग्निर्ह वाव राजन् गायत्रीमुखम् । जैउ ४, ६,३,२ ।

२५०. अग्निर्ह वै ब्रह्मणो वत्सः । जैउ २,५,१,१ ।

२५१. अग्निर्हि देवानां पशुः । ऐ १,१५ ।

२५२. अग्निर्हि देवानां पात्नीवतः (ग्रहः) । कौ २८,३ ।

२५३. अग्निर्हि रक्षसामपहन्ता । माश १,२,१,६;९;२,१३ ।

२५४. अग्निर्हि वै धूः । माश १,१,२,९ ।

२५५. अग्निर्होता (+पञ्चहोतॄणाम् [तै.]) । मै १,९,१; काठ ९,८; तै ३,१२,५,२; तैआ ३,३,१ ।

२५६. अग्निर्ह्येष यत्पशवः । माश ६,२,१,१२ ।

२५७. अग्निश्च जातवेदाश्च सहोजा अजिरा प्रभुः। वैश्वानरो नर्यापाश्च पङ्क्तिराधाश्च सप्तमः। विसर्पेवाष्टमोऽग्नीनाम्। एतेऽष्टौ वसवः क्षिता इति। तैआ १,९,१,१।

२५८. अग्निश्च म आपश्च मे (यज्ञेन कल्पन्ताम्)। तैसं ४,७,५,१।

२५९. अग्निश्च ह वा आदित्यश्च रौहिणावेताभ्यां हि देवताभ्यां यजमानाः स्वर्गं लोकं रोहन्ति। माश १४,२,१,२।

२६०. अग्निष्ट्वा वसुभिः पुरस्ताद् रोचयतु (+ गायत्रेण छन्दसा [तैआ.])। मै ४,९,५; तैआ ४,६,१।

२६१. अग्निः षट्पादस्तस्य पृथिव्यन्तरिक्षं द्यौराप ओषधिवनस्पतय इमानि भूतानि पादाः। गो १,२,९।

२६२. अग्निस्सर्वा अन्वोषधीः (°र्वा दिश आभाति [मै.])। मै ३,१,८; काठ १९,५।

२६३. अग्निस्सर्वा दिशो (+अनु [तैसं., तैआ.]) विभाति। तैसं ५,१,७,४;८,६; काठ १९,७;२२,१; क ३०,५; तैआ ५,३,७।

२६४. अग्निः सर्वा देवताः। तैसं २,२,९,१;३; ३,११,२; ५, ५,१,४; काठ १२,१; काठसंक ११८; १२२; ऐ २,३; तै १, ४, ४, १०; माश १, ६, ३, २०; तैआ ५,४,५।

२६५. अग्निस्सूर्यस्य (योनिः)। काठ ७,४।

२६६. अग्निः सृष्टो नोदद्दीप्यत तं प्रजापतिरेतेन साम्नोपाधमत् स उदद्दीप्यत दीप्तिश्च वा एतत्साम ब्रह्मवर्चसञ्च दीप्तिञ्चैवैतेन ब्रह्मवर्चसञ्चावरुन्धे। तां १३, ३,२२।

२६७. अग्नी रात्र्यसा आदित्योऽहः। काठ ७,६।

२६८. अग्नी रुद्रः। मै २,३,७; ३,१,३;७,७; ९,१; ४,२,१०; ६,९।

२६९. अग्नेः पक्षतिः। मै ३,१५,४; काठ ५३,११।

२७०. अग्नेः पूर्वदिश्यस्य···स्थाने स्वतेजसा भानि। तैआ १,१८।

२७१. अग्नेः पूर्वाहुतिः। तै २,१,७,१।

२७२. अग्ने कद्माग्ने किंशिलाग्ने दुध्राग्ने वन्याऽग्ने कक्ष्य या ता इषुर्युवा नाम तया विधेम। मै २,१३,१२ (तु. तैसं ५,५,९,१-२; काठ ४०,३)।

२७३. अग्ने गृहपते यस्ते घृत्यो भागस्तेन सह ओज आक्रममाणाय धेहि। तैसं २,४,५,२।

२७४. अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासम्। मै १,५,१४; काठ ५,५;७,२।

२७५. अग्ने···जातवेदः शिवो भव। मै २,७,८।

२७६. अग्ने दुःशीर्ततनो जुषस्व···एषा वा अस्य (अग्नेः) श्रणती तनूः क्रूरैतया वा एष पशूञ्छमायते। मै १,८,६।

२७७. अग्ने पृथिवीपते (ऊर्जं नो धेहि)। तै ३,११,४,१।

२७८. अग्ने ब्रह्म गृहीष्व (गृह्णीष्व [मै., क.])। मै १,१,९; काठ १,८; क १,८।

२७९. अग्नेऽभ्यावर्तिन्नभि न आ वर्तस्वाऽऽयुषा वर्चसा सन्या मेधया प्रजया धनेन। तैसं ४,२,१,२।

२८०. अग्ने महाँ असि ब्राह्मण भारत। कौ ३,२; तै ३,५,३,१; माश १,४, २,२।

२८१. अग्ने यत्ते तपस्तेन तं प्रतितप (°त्ते हरस्तेन तं प्रतिहर) योऽस्मान् द्वेष्टि यं च वयं द्विष्मः। काठ ६,९।

२८२. अग्ने रथन्तरम् (इन्द्रोऽन्वपाक्रामत्)। मै २,३,७।

२८३. अग्नेरहं देवयज्ययान्नादो भूयासम्। तैसं १,६,२,३।

२८४. अग्नेरहं स्विष्टकृतो देवयज्ययायुःप्रतिष्ठां गमेयम्। काठ ५,१।

२८५. अग्नेरायुरसि तस्य (+ ते [काठ.]) मनुष्या आयुष्कृतः। मै २,३,४; काठ ११,७।

२८६. अग्ने रुचां पते नमस्ते। काठ ६,९; ७,६।

२८७. अग्ने रूपं स्पर्शाः। ऐआ ३,२,५।

२८८. अग्नेर् ऋग्वेदः (अजायत)। माश ११,५,८,३।

२८९. अग्नेरेतद्वैश्वानरस्य भस्म (रेतो [माश ७,१,१,१०]) यत्सिकताः। माश ७,१, १, ९।

२९०. अग्नेरेतास्तन्वो यद् धिष्ण्याः। मै ४,६,९।

२९१. अग्ने रेतो हिरण्यम्। माश २,२,३,२८।

२९२. अग्नेर्घृतम्। तैसं ५,५,१,५।

२९३. अग्नेर्भागोऽसि दीक्षाया आधिपत्यं ब्रह्मस्पृतं त्रिवृत् स्तोमः। तैसं ४,३,९,१; मै २,८,५।

२९४. अग्नेर्यद्रेतः सिच्यते तद्धिरण्यमभवत्। काठसंक १३९।

२९५. अग्नेर्वाऽएतद्रेतो यद्धिरण्यम्। जै १,५६; माश १४,१,३,२९;।

२९६. अग्नेर्वा एतद्वैश्वानरस्य भस्म यत् सिकताः। मै ३,२,३;७; माश ३,५,१,३६।

२९७. अग्नेर्वा एतद्वैश्वानरस्य (श्रौष्टं) साम। तां १३,११,२३।

२९८. अग्नेर्वा एताः सर्वास्तन्वो यदेता (वाय्वादयः) देवताः। ऐ ३,४।

२९९. अग्नेर्वा एषा तनूर्यदोषधयः। तै ३,२,५,७।

३००. अग्नेर्वा एषा वैश्वानरस्य प्रिया तनूर्यत्सिकताः। काठ २०, १।

३०१. अग्नेर्वा एषा वैश्वानरस्य योनिर्यदवका। काठ २१,३।

३०२. अग्नेर् (वत्सः) वृत्रः। तैआ १,१०,६,१३।

३०३. अग्नेर्वै गुप्त्या अग्निहोत्रꣳ हूयते। काठ ६,२।

३०४. अग्नेर्वै चक्षुषा मनुष्या विपश्यन्ति। तैसं २,२,९,३;३,८,१-२।

३०५. अग्नेर्वै प्रातःसवनम् (°र्वै भागः पुनराधेयः [मै.])। मै १,७,२; कौ १२,६;१४,५;२८,५।

३०६. अग्नेर्वै मनुष्या नक्तं चक्षुषा पश्यन्ति, सूर्यस्य दिवैतौ वै (°र्यस्य दिवा तौ [काठ.]) चक्षुषः प्रदातारौ। मै २,३,६; काठ ११,१।

३०७. अग्नेर्वै मनुष्याश्चक्षुषा पश्यन्ति, विष्णोर्देवताः। काठ १०,१।

३०८. अग्नेर्वै सर्वमाद्यम् । तां २५,९,३ ।

३०९. अग्नेर्वै सृष्टस्य तेजा उददीप्यत, तदश्वत्थं प्राविशत् । मै १,६,५ ।

३१०. अग्नेर्वै सृष्टस्य भा अपाक्रामत्, तद् विकङ्कतं प्राविशत् । मै ३.१,९ ।

३११. अग्नेर्वै सृष्टस्य विकङ्कतं भा आर्छत् । काठ १९,१०;२१,९; क ३०,१० ।

३१२. अग्नेर्हिरण्यं प्रतिजगृहुषस्तृतीयमिन्द्रियस्यापाक्रामत् । काठ ९,१२ ।

३१३. अग्नेष्ट्वास्येन प्राश्नामि । गो २, १,२ ।

३१४. अग्ने•••स नो भव शिवस्त्वम् । मै २,७,१० ।

३१५. अग्ने सहस्राक्ष शतमूर्धञ्छततेजश्शतं ते प्राणास्सहस्रं व्यानाः । त्वꣳ साहस्रस्य राय ईशिषे ।
काठ ७,३ ।

३१६. अग्नेस्तूषः (वासः) । काठ २३, १ ।

३१७. अग्नेस्तेजसा सूर्यस्य वर्चसा (बृहस्पतिर्वो युनक्तु) । मै २,७,१२; तैब्रा ६,३,३ ।

३१८. अग्नेस्तेजसेन्द्रस्येन्द्रियेण (+सूर्य्यस्य वर्चसा [तां.]) । मै २, ६, ११; ४, ४, ५; तां १, ३,५;७,३ ।

३१९. अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त । तैसं २,६,६,१; ६,२,८,४ ।

३२०. अग्नेस्त्वा मात्रयेत्याहात्मानमेवास्मिन् (आमयाविनि) एतेन दधाति । तैसं २,३,११,४ ।

३२१. अग्नेस्त्वाऽऽस्येन प्राश्नामि । तैसं २,६,८,६ ।

३२२. अग्नेः समिदस्यभिशस्त्या मा पाहि । क ४,८ ।

३२३. अग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयम् । तैसं १,६,२,४ ।

३२४. अग्ने हव्यꣳ रक्षस्व । तैसं १,१,४,२ ।

३२५. अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति । माश १,६,२,८ ।

३२६ अङ्गिरसां वा एकोऽग्निः । ऐ ६,३४ ।

३२७. अङ्गिरसो धिष्णियैरग्निभिः (सहागच्छन्तु) । तैब्रा ३,८,१ ।

३२८. अजरं वा अमृतमग्नेरायुः । काश ३,१,१०,४ ।

३२९. अजा ह्यग्नेरजनिष्ट गर्भात् । तैसं ४,२,१०,४ ।

३३०. अजो ह्यग्नेरजनिष्ट शोकात् । मै २,७,१७; काठ १६,१७ ।

३३१. अतूर्तो होतेत्याह न ह्येतं (अग्निं) कश्चन तरति । तैसं २,५,९,२-३ ।

३३२. अत्र वैश्यस्यापि (अग्निः) देवता । मै २,३,१ ।

३३३. अथ यत्रैतत्प्रतितरामिव तिरश्चीवार्चिः संशाम्यतो भवति तर्हि हैष (अग्निः) भवति मित्रः । माश २,३,२,१२ ।

३३४. अथ यत्रैतत्प्रथमꣳसमिद्धो भवति, धूप्यतऽएव तर्हि हैष भवति रुद्रः। माश २,३,२,९।

३३५. अथ यत्रैतत्प्रदीप्ततरो भवति, तर्हि हैष (अग्निः) भवति वरुणः। माश २,३,२,१०।

३३६. अथ यत्रैतत्प्रदीप्तो भवति, उच्चैर्धूमः परमया जूत्या बल्बलीति, तर्हि हैष (अग्निः) भवतीन्द्रः। माश २,३,२,११।

३३७. अथ यत्रैतदङ्गाराश्चाकाश्यन्तऽ इव। तर्हि हैष (अग्निः) भवति ब्रह्म। माश २,३, २,१३।

३३८. अथ (अग्निः) यदुच्च ह्रूष्यति नि च ह्रूष्यति तदस्य मैत्रावरुणं रूपम्। ऐ ३, ४।

३३९. अथ योऽग्निर्मृत्युस्सः। जैउ १,८,१,८; २,५,१,२।

३४०. अथर्वा त्वा प्रथमो निरमन्थदग्ने। मै २,७,३।

३४१. अथ ह वै त्रयः पूर्वेऽग्नय आसुर्भूपतिर्भुवनपतिर्भूतानां पतिः। जै २,४१।

३४२. अथाग्नेरष्टपुरुषस्य (महिमा कथ्यते)। तैआ १,८,८,२२।

३४३. अथातो दक्षिणः पक्षः सोऽयं लोकः सोऽयमग्निः सा वाक्तद्रथन्तरं स वसिष्ठः। ऐआ १,४,१।

३४४. अथैषोऽग्नये वैश्वानराय द्वादशकपालः (पुरोडाशः)। मै ३,३,१०।

३४५. अथोऽग्निर्वै सुक्षितिरग्निर्ह्येवास्मिँल्लोके सर्वाणि भूतानि क्षियति। माश १४,१, २,२४।

३४६. अद्भ्यो वाऽ एष (अग्निः) प्रथममाजगाम। माश ६,७,४,४।

३४७. अनाधृष्टाऽसि (°नाधृष्या [तैआ.]) पुरस्तादग्नेराधिपत्या (°त्ये [तैआ.]) आयुर्मे दाः। मै ४, ९,३; तैआ ४,५,३।

३४८. अनुष्टुब् वा अग्नेः प्रिया तनूः। काठ १९,५।

३४९. अन्नादा (प्रजापतेर्या तनूः) तदग्निः। ऐ ५,२५।

३५०. अन्नादोऽग्निः। माश २,१,४,२८;२,४,१।

३५१. अन्नादो वा एषोऽन्नपतिर्यदग्निः। ऐ १,८।

३५२. अपरिमिता ह्यग्नेस्तन्वोऽग्निना वा अनीकेनेन्द्रो वृत्रमहन्। मै ३,९,५।

३५३. अपाꣳह्येष गर्भो यदग्निः। तैसं ५,१,५,८।

३५४. अप्सुयोनिर्वा अग्निः। तैसं ५,२,२,४।

३५५. अप्सुषदसि श्येनसदसीत्याहैतद्वा अग्ने रूपम्। तैसं ५,३,११,२।

३५६. अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे। तैसं ४,२,११,३।

३५७. अमृतो ह्यग्निस्तस्मादाहादब्धायविति। माश १,९,२,२०।

३५८. अयं वाऽअग्निरर्कः (°ग्निरर्क्यः [माश ८, २, १, ४]) माश ८, ६, २, १९; ९, ४, १, १८; शांआ १,४।

३५९. अयं वाऽअग्निर्ऋतमसावादित्यः सत्यं यदि वासावृतमयꣳसत्यमुभयम्वेतदयमग्निः। माश ६, ४,४, १०।

३६०. अयं वाऽअग्निर्लोकः (°ग्निर्ब्रह्म च क्षत्रं च [माश ६,६,३,१५]) । माश १, ९,२,१३।

३६१. अयं वाव यः (वायुः) पवते सोऽग्निर्नाचिकेतः । तै ३,११,७,१ ।

३६२. अयं वाव लोकोऽग्निश्चितः । माश १०,१,२,२ ।

३६३. अयं वै (पृथिवी-) लोकोऽग्निः । माश १४, ९,१,१४ ।

३६४. अयं ते योनिर्ऋत्विय इत्यरण्योः समारोहयत्येष वा अग्नेर्योनिः । तैसं ३, ४,१०,४-५ ।

३६५. अयमग्निर्ब्रह्म । माश ९,२,१,१५ ।

३६६. अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैतं घोषं शृणोति । माश १४, ८,१०,१ ।

३६७. अयमग्निः सहस्रयोजनम् (स्वर्विद् [माश ९,२,१,८]) । माश ९,१,१,२९ ।

३६८. अया ते अग्ने समिधा विधेम । तैसं १,२,१४,६ ।

३६९. अया वै नामैषाग्नेः प्रिया तनूः । मै १,४,८ ।

३७०. अरुणाश्वा इहागताः । वसवः पृथिवीक्षितः । अष्टौ दिग्वाससोऽग्नयः । तैआ १,१२,४,९ ।

३७१. अर्कोऽग्निः । मै ३,१,१;२,४; काठ १९,१; क २९, ८ ।

३७२. अर्को ज्योतिस्तदयमग्निः । मै १,६,२ ।

३७३. अर्को वा (+एष यद् [तैसं ५,३,४,६]) अग्निः । तैसं ५,५,६,३ ।

३७४. अर्चिषम् (प्राणम् [माश.]) अग्नेः (आदित्य आदत्त) । जै २,२६; माश ११,८,३,७ ।

३७५. अवकामनूप दधात्येषा वा अग्नेर्योनिः । तैसं ५,४,२,१ ।

३७६. अशिष्टो ह्यग्निस्तस्मादाहाशीतमेति । माश १,९,२,२० ।

३७७. अश्वो वै भूत्वाग्निर्देवेभ्योऽपाक्रामत् स यत्रातिष्ठत् तदश्वत्थस्समभवत्, तदश्वत्थस्याश्वत्थत्वम् । काठ ८, २ ।

३७८. असा आदित्योऽग्निः । काठसंक १२२ ।

३७९. असौ वाऽआदित्य एषोऽग्निः । माश ६,४,१,१; ३,९;१० ।

३८०. असौ वा आदित्योऽग्निरनीकवान् ( °त्योऽग्निः शुचिः [तै १,१,६,२] ) । तै १,६,६,२ ।

३८१. असौ वा आदित्योऽग्निर्वसुमान् (°ग्निर्वैश्वानरः [मै.] । मै २,१,२; तैआ ५,७,१० ।

३८२. अस्मिंस्तेन (पृथिवी-) लोके प्रतितिष्ठति, अग्निं ज्योतिरवरुन्द्धे । काठसंक ९ ।

३८३. अह्नोऽग्निः (वत्सः) । ताम्रो अरुणः । तैआ १,१०,५-६ ।

३८४. आकूत्यै प्रयुजे अग्नये स्वाहा, मेधायै मनसे अग्नये स्वाहा, दीक्षायै तपसे अग्नये स्वाहा, सरस्वत्यै पूष्णे अग्नये स्वाहा । तैसं १,२,२,१; मै १,२,२; काठ २,२ ।

३८५. आत्मैव (आत्मा वा [माश ७,३,१,२] ) अग्निः । माश ६,७,१,२०; १०,१,२,४ ।

३८६. आदित्योऽग्निः । काठसंक ८३ ।

३८७. आदित्यो वाऽअस्य (अग्नेः) दिवि वर्चः । माश ७,१,१,२३ ।

३८८. आप्नं त्वाग्ने मनसा ··· तपसा ··· दीक्षया ··· उपसद्भिर् ··· सुत्यया ··· दक्षिणाभिर् ··· अवभृथेन···वशया···स्वगाकारेण ··· एनमाप्नोति । तैसं ५,५,७,५ ।

३८९. आपो वरुणस्य पत्न्य आसन्, ता अग्निरभ्यध्यायत्, ताः समभवत् । तैसं ५,५,४,१; तै १, १,३,८ ।

३९०. आपो वा अग्निः पावकः । तै १,१,६,२ ।

३९१. आपो वा अग्नेर्योनिः (°स्सपत्नः [मै ३,४,१०]) । मै ३,२,२;४,१०; काठ १९,१२; क ३१,२ ।

३९२. आयुर्दा अग्नेऽस्यायुर्मे देहि । वर्चोदा ······ तनूपा ······ यन्मे तनुवा ऊनं तन्म आ पृण । तैसं १,५,५,३-४ ।

३९३. आयुर्वाऽग्निः । माश ६,७,३,७ ।

३९४. आहुतयो वाऽअस्य (अग्नेः [मै.]) प्रियं धाम । मै १,८,५; माश २, ३,४, २४ ।

३९५. इदमग्न आयुषे वर्चसे कृधि । काठ ३६,१५ ।

३९६. इन्द्रतमेऽग्नौ स्वाहा । मै ४,९,९ ।

३९७. इन्द्रो वा अधृतश्शिथिल इवामन्यत, सोऽग्नौ चैव बृहस्पतौ चानाथत । काठ ११, १ ।

३९८. इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने । तैसं ३,१,४,१ ।

३९९. इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निम् । ऐआ २,१,१ ।

४००. इमे वै लोका एषोऽग्निः । माश ६,७,१,१६;७,३,१,१३ ।

४०१. इयं (पृथिवी) वाऽअग्निः (+अपन्नगृहः [तै.]) । तै ३,३,९,८; माश ७,३,१,११ ।

४०२. इयं (पृथिवी) वा अग्निर्बृहन्नाकः । काठ ३१,२; क ४७,२ ।

४०३. इयं वा अग्निर्वैश्वानरः । तैसं ५,६,६,४; मै १,४,१३;२,१,२; तै ३,८,६,२; ३,९,१७,३ ।

४०४. इयं (पृथिवी) वा अग्नेर्योनिः । मै ३,२,१ ।

४०५. इयं (पृथिवी) वावाग्निः । क ३५,३ ।

४०६. इयं वै पृथिव्यग्निर्वैश्वानरः । माश ३,८,५,४ ।

४०७. इयं (पृथिवी) ह्यग्निः । माश ६,१,१,१४;२९ ।

४०८. इय ९ (पृथिवी) ह्यग्नेर्योनिः । काठ ७,४ ।

४०९. ईश्वरो वा एषो (अग्निः) ऽन्तरिक्षसद् ( विद्युत् ) भूत्वा प्रजा हि ९ सितोर्यदाह शिवो भव प्रजाभ्या इति, प्रजाभ्य एवैन ९ (अग्निम्) शिवमकः । मै ३,१,६ ।

४१०. उत्तरत उपचारोऽग्निः । तैसं ५,३,७,५ ।

४११. उत्तरार्धेऽग्नये जुहोति । तैसं २,६,२,१ ।

४१२. उदपुरा नामास्यन्नेन विष्टा······मनुष्यास्ते गोप्तारोऽग्निरधिपतिः । मै २,८,१४ ।

४१३. उदेह्यग्ने अधि मातुः पृथिव्याः । काठ ७,१२ ।

४१४. उपोदको नाम लोको यस्मिन्नयमग्निः । जै १,३३४ ।

४१५. उभयं वाऽएतदग्निर्देवाना ँ होता च दूतश्च । माश १,४,५,४ ।

४१६. उलूखलमुप दधात्येषा वा अग्नेर्नाभिः । तैसं ५,२,८,७ ।

४१७. उशिक् पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो नि धायि । तैसं ४,२,२,२ ।

४१८. ऊर्ध्वो ह्ययमग्निर्दीप्यते । जै १,२४७ ।

४१९. ऋग्वेद एवाग्नेः (उदैत्) । जै १,३५७ ।

४२०. ऋताषाड् ऋतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो (°रसो मुदा [मै., क.], ) नाम । तैसं ३,४,७,१; मै २,१२,२; क २९,३ ।

४२१. ऋषयो ह्येतम् (अग्निम्) अस्तुवन् । तैसं २,५,९,१ ।

४२२. एतद्वा अग्निधान ँ हस्तस्य यत्पाणिस्तस्मादेतो हस्तस्याग्निर्नतमा ँ विदहति । मै १. ८,१ ।

४२३. एतद्वा अग्नेः प्रियं (प्रियतमं [माश.]) धाम यद् घृतम् (आज्यम् [तैसं.]) । तैसं ५, १,९,५; काठ २०,७; २१,८; माश १,३,२,१७ ।

४२४. एतद्वा अग्नेस्तेजो यद् घृतम् । तैसं २,५,२,७ ।

४२५. एतद्वै यजमानस्य स्वं यदग्निः । एतदग्नेर्यद्यजमानः । मै १,५,११ ।

४२६. एतम् (सूर्यम्) अग्नावध्वर्यवः (मीमांसन्ते) । ऐआ ३,२,३ ।

४२७. एतानि वै तेषामग्नीनां नामानि यद्भुवपतिर्भुवनपतिर्भूतानां पतिः । माश १,३,१, १७ ।

४२८. एतामग्नये प्राचीं दिशमरोचयन् । काठ ८,१ ।

४२९. एतावन्तोऽग्नय[1] आधीयन्ते । तै १, १,१०,४ ।

४३०. एते वै यज्ञस्यान्त्ये तन्वौ यदग्निश्च विष्णुश्च । ऐ १,१ ।

४३१. एष (अग्निः) उ वा इमाः प्रजाः प्राणो भूत्वा बिभर्ति तस्माद्वेवाह भारतेति (भरतवत् [माश १,५,१,८]) । माश १,४, २,२ ।

४३२. एष उ ह वाव देवानां नेदिष्ठमुपचर्यो (महाशनतमः [जैउ २,५,३, १]) यदग्निः । जैउ २,५,२,१ ।

४३३. एष (अग्निः) एव महान् । माश १०,४,१,४ ।

४३४. एष खलु वै देवरथो यदग्निः । तैसं ५,४,१०,१ ।

४३५. एष रुद्रो: यदग्निः । तैसं २,६,६,६; ३, ५,५,२; तै १,१,५,८-९; १,६; ८,४; ४,३,६ ।

४३६. एष वा अग्निः पाञ्चजन्यो यः पञ्चचितीकः । तैसं ५,३,११,३ ।

४३७. एष वा अग्निर्वैश्वानरो य एष (आदित्यः) तपति । जै १,४५ ।

४३८. एष (+ह [गो.]) वा अग्निर्वैश्वानरो यत् प्रदाव्यः (प्रवर्ग्यः [तैआ.]) । गो २, ४, ८; तै ३, ३,८,४; तैआ ५,१०,५ ।

---

1. १. अन्वाहार्यपचनः, २. गार्हपत्यः, ३. आहवनीयः, ४. सभ्यः, ५. आवसथ्यः ।

४३९. एष वा अग्निर्वैश्वानरो यदसा आदित्यः (°नरो यद् ब्राह्मणः [तैसं., तै.])। तैसं ५,२,८,१-२; मै १,६,३;६; तै २,१,४,५; ३,७,३,२ ।

४४०. एष वै तुथो विश्ववेदा यदग्निः । मै ४, ८,२ ।

४४१. एष वै देवाननुविद्वान्यदग्निः । माश १,५,१,६ ।

४४२. एष वै धुर्योऽग्निः (यज्ञो यदग्निः [माश.]) । तै ३,२,४,३; माश २,१,४,१९ ।

४४३. एष वै मृत्युर्यदग्नी रिहन्नेव नाम । जै १,२६ ।

४४४. एष (अग्निः) हि देवेभ्यो हव्यं भरति तस्माद्भरतोऽग्निरित्याहुः । माश १, ४,२,२; ५,१,८ ।

४४५. एष हि यज्ञस्य सुक्रतुर्यदग्निः । माश १,४,१,३५ ।

४४६. एष हि रुद्रो यदग्निः ([अग्निः] वाजानां पतिः [ऐ.]) । मै १,६,७;११; ऐ २,५ ।

४४७. एष हि हव्यवाड् (हव्यवाहनो) यदग्निः । माश १,४,१,३९ ।

४४८. एषा वा अग्नेः पशव्या तनूर्या दधिक्रावती । काठ ७,४ ।

४४९. एषा वा अग्नेः प्रिया तनूर्यच्छन्दां ँसि (°नूर्यत्कुमुकः [मै., तै.]) मै ३,१,९; काठ २०,१; तै १,४,७,३ ।

४५०. एषा वा अग्नेः प्रिया तनूर्यदजा । तैसं ५,१, ६,२; काठ १९,५; क ३०,३; तैआ ५,२, १३ ।

४५१. एषा वा अग्नेः प्रिया तनूर्यद् घृतम् । मै ३,२,६;७;७,५; काठ २४,५; क ३७,६ ।

४५२. एषा वा अग्नेः प्रिया तनूर्यद् वैश्वानरः (°तनूर्यावैश्वानरी [काठ.]) । तैसं ५,५,१, ५; मै ३, १,१०;३,३; काठ १९,९ ।

४५३. एषा वा अग्नेर्दधिक्रावती प्रिया तनूः पशव्या सर्वसमृद्धा । मै १,५, ६ ।

४५४. एषा वा अग्नेर्भिषज्या तनूर्या सुरभिमती अग्नये सुरभिमतेऽष्टाकपालं निर्वपेद्यं प्रमीत ँ श्रृणुयुः पूतिर्वा एष श्रूयते यः प्रमीतश्श्रूयते । काठ १०,६ ।

४५५. एषा वा अग्नेर्भेषजा तनूर्यत् सुरभिः । मै २,१,३; १० ।

४५६. एषा वा अस्य (अग्नेः) घोरा तनूर्यद् रुद्रः । तैसं २,२,२,३ ।

४५७. एषा वा अस्य (अग्नेः) जातवेदस्या तनूः क्रूरतया वा एष पशून्शमायते । मै १,८,६ ।

४५८. एषा वा अस्य (अग्नेः) भेषज्या तनूर्यत् सुरभिमती । तैसं २,२,२,४ ।

४५९. एषा संवत्सरस्य क्रूरा तनूर्या वैश्वानरी तयैतदभितपन्नभिशोचय ँस्तिष्ठति भागधेय-मिच्छमानस्तामेवास्य (अग्निं) प्रीणाति साऽस्मै प्रीता वृष्टिं निनयति । काठ १०,३ ।

४६०. एषा ह वास्य (अग्नेः) सहस्रं भरता यदेनमेकं सन्तं बहुधा विहरन्ति । ऐ १,२८ ।

४६१. एषोऽग्निर्देवानां ँ सेनानी । काठ ३६,८ ।

४६२. ओजो वा अग्निः । काठ २०,११; क ३१, १३ ।

४६३. ओषधयो वा अग्नेर्भागधेयम् ( °वा एतस्य मातरः [क.]) । तैसं ५, १,५,९; क ३०,१ ।

४६४. कामा वा अग्नयः । तैसं ५,१,८,२; काठ १९,८; क ३०, ६ ।

७. एष वै बहुलो वैश्वानरः (यदाकाशः)। माश १०, ६, १, ६।
८. तद्देवाः प्राणे निःश्रेयसं विचिन्त्य प्राणमेव प्रज्ञात्मानमभिसंस्तूय सहैतैः सर्वैरस्माल्लोकादुच्चक्रमुस्ते वायुप्रतिष्ठाऽऽकाशात्मानः स्वर्ययुः। कौउ २,१४।
९. तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। तैआ ८, १, १; तैउ २,१,१।
१०. पृथिवी पूर्वरूपम्। द्यौरुत्तररूपम्। आकाशः सन्धिः। वायुः सन्धानम्। तैआ ७,३,१-२; तैउ १, ३, १-२।
११. मूर्धन्याकाशम् (प्रजापतिरावेशयत्)। शांआ ११, १।
१२. य एवायमन्तरिक्ष आकाश एष एव स पुरुषः। जै २, ५६।
१३. स इमान् प्राणानाकाशानभिनिर्मन्थति। जै २, १८।
१४. स यस्स आकाश आदित्य एव सः। एतस्मिन् ह्युदिते सर्वमिदमाकाशते। जैउ १, ८,१,२।
१५. स यस्स आकाश इन्द्र एव सः। जैउ १, ९, १, २; १०, १, १; २, ५।
१६. सर्वमित्याकाशे (प्रतिष्ठितम्)। तैआ ९,१०,३; तैउ ३,१०,३ ॥ [°श- अन्न- १५६ द्र.]।

आकूत- यज्ञो वा आकूतं, दक्षिणाऽऽकूतिः। मै १, ४,१४।

आकूति-आकूत्या मनसा सह (घर्मो विभाति)। मै ४, ९,१३; तैआ ४,२१,१ ॥ [°ति- अग्नि- ३८४; आकूत- द्र.]।

आकूपार- अकूपार- द्र.।

आक्षार (सामन्-)-

१. एभ्यो वै लोकेभ्यो रसोऽपाक्रामत्तं प्रजापतिराक्षारेणाक्षारयद्यदाक्षारयत्तदाक्षारस्याक्षारत्वम्। तां ११, ५, १०।
२. तस्माद्यः पुरा पुण्यो भूत्वा पश्चात् पापीयान् स्यादाक्षारं ब्रह्मसाम कुर्वीतात्मन्येवेन्द्रियं वीर्य्यं ९ रसमाक्षारयति। तां ११, ५,११।
३. ते देवा असुरान् कामदुघाभ्य आक्षारेणानुदन्त नुदते भ्रातृव्यं कामदुघाभ्य आक्षारेण तुष्टुवानः। तां ११, ५, ९।

आखु-

१. आखुं ते रुद्र पशुं करोमि। मै १, १०, ४; २०।
२. आखुस्ते (+ रुद्र ⌊तैसं.⌋) पशुः। तैसं १, ८, ६, १; तै १, ६,१०,२; माश २, ६,२,१०।
३. भूम्या आखूनालभते। मै ३, १४,७।

आखु-किरि- पुरीषीति वै गृहमेधिनमाहुः, पुरीषस्य खलु वा एतन्निरूप ९ यदाखुकिरिः। मै १,६,३ (तु. माश २,१,१,७)।

आगति- वागागतिः। जै १,१४०।

आ-गा(<√गै)- तद्यास्तिस्र आगा इम एव ते लोकाः। जैउ १,६,१,७।

आगीत- अथ यानि त्रीण्यागीतान्यग्निर्वायुरसावादित्य एतान्यागीतानि। जैउ १,६,१,८।

आगू- आगूर्वज्रः। ऐ २,२८।

**आग्नापौष्ण**- अग्नि- > अग्नापूषन्- द्र. ।
**आग्नावैष्णव**- अग्नि- > अग्नाविष्णु- द्र. ।
**आग्निमारुत**- अग्नि- > अग्नामरुत्- द्र. ।
**आग्निवारुण**- अग्नीवरुण- द्र. ।
**आग्नीध्र**-, °ध्रीय- अग्नि[,ग्नी]ध्- द्र. ।
**आग्नेय**-, °यी- अग्नि- द्र. ।

**आग्र[ग्रा]यण**- अग्रयण- द्र. ।

**आग्लागृध**- तं वा एतमाग्लाहृतं संतमाग्लागृध इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः । य एष ब्राह्मणो गायनो वा नर्त्तनो वा भवति तमाग्लागृध इत्याचक्षते । गो १,२,२१ ।

**आघार**-
१. प्राण (°णो वा [मै.]) आघारः । मै १,४,१२;४,१,१४; तै ३,३,७,९ ।
२. मनश्चैवास्य वाक् चाघारौ सरस्वांश्च सरस्वती चेति । माश ११,२,६,३ ।
३. यजमानो वा आघारः । मै १,४,१२ ।
४. शिरो वा आघार: (+आत्मा हविः [मै ३,१०,४]) । मै ३,९,६ ।
५. शिरो वा एतद्यज्ञस्य यदाघारः । तैसं २,५, ११, ७; ६, ३,७,३; मै ४,१,१४; काठ २६,८; तै ३,३,७,१० ।
६. शिरो वै यज्ञस्योत्तर आघारः । माश १,४,५,५ ।

**आङ्गिरस**- अङ्गिरस्- द्र. ।

**आचमन**-
१. तद्यथा भोक्ष्यमाणोऽप एव प्रथममाचामयेदप उपरिष्टात् । गो १, २,९ ।
२. तद्विद्वा९सः श्रोत्रियाः । अशिष्यन्त आचामन्त्यशित्वाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते । माश १४,९,२, १५ ।

**आचार्य**-
१. आचार्यो ब्रह्मचारिणः प्रजापतिः । काठसंक ५१ः ६;१३८ः२३ ।
२. यान्यस्माक९ ( आचार्याणाम् ) सुचरितानि तानि स्वयोपास्यानि नो इतराणि । तैआ ७, ११,२-३; तैउ १,११,२-३ ।
३. संस्थानाध्यायिन आचार्य्याः पूर्वे बभूवुः श्रवणादेव प्रतिपद्यन्ते न कारणं पृच्छन्ति । गो १, १,२७ ।

**आचार्यदेव**- आचार्यदेवो भव । तैआ ७,११,२; तैउ १,११,२ ।

**आच्छच्छन्दस्**- अन्नं वाऽआच्छच्छन्दः । माश ८,२, ३,४ ।

**आच्या-दोह** ( आज्यादोह- )- एतैर्वै सामभिः प्रजापतिरिमान् सर्वान् कामान् दुग्ध यदाच्यादुग्ध तदाच्यादोहानामाच्यादोहत्वम् । तां २१,२,५ ।

**आजि**- परमं वा एतन्महो यदाजिः । जै २,४०५ ।

**आजिग**- आजिगं (सामन्-) भवत्याजिजित्यायै । तां १५,९,६ ।

**आजिज्ञासेन्या** (ऋच्-)-
१. अथाजिज्ञासेन्याः शंसतीहेत्थ प्रागपागुदागधरागिति । गो २,६, १३ ।
२. आजिज्ञासेन्याभिर्ह (+ह [गो.]) वै देवा असुरानाज्ञायाथैनानत्यायन् । ऐ ६,३३; गो २,६,१३ ।

आज्ञा- आज्ञां (चित्तम् [माश.]) मनुष्याणाम् (आदित्य आदत्त)। जै २,२६; माश ११, ८,३, ९।

१आज्य (विलीन-सर्पिस्-)-

१. अग्नेर्वा एतद्रूपम्। यदाज्यम्। तै ३, ८, १४, २।
२. अयातयाम ऽ ह्येतत् प्राजापत्यं यदाज्यम्। काठ ३०, १; क ४६, ४; ४७, ९।
३. अयातयाम ह्याज्यम्। माश १, ५, ३, २५।
४. अस्कन्नमद्य देवेभ्य आज्य ऽ सम्भ्रियासमित्यविक्षुब्धमद्य देवेभ्यो यज्ञं तनवा इत्येवैतदाह। माश १, ४,५, १।
५. आज्यं वै देवानां सुरभि। ऐ १, ३।
६. आज्यं वै यज्ञः। मै ४, १, १२।
७. आज्य ऽह वाऽ अनयोर्द्यावापृथिव्योः प्रत्यक्ष ऽ रसः। माश २, ४, ३, १०।
८. आज्यं मज्जा। माश १२, ९, १, ११।
९. आज्येन वै वज्रेण देवा वृत्रमघ्नन्। काठ २४, ९; २९, १; क ३८, २; ४५,२।
१०. आज्येन संयौति······प्रियेणैवैनं धाम्ना समर्धयत्यथो तेजसा। तैसं ५, १, ९, ५।
११. आत्मा ऽऽज्यम् (यज्ञस्य)। मै ४, १, १४।
१२. ईश्वरो वा एषो ऽन्धो भवितोः। यश्चक्षुषाज्यमवेक्षते निमील्यावेक्षेत। तै ३, ३, ५,२।
१३. एतद्रेतः। यदाज्यम्। तै १, १, ९, ४।
१४. एतद्वै जुष्टं देवानां यदाज्यम्। माश १, ७, २, १०।
१५. एतद्वै मधु दैव्यं यदाज्यम्। ऐ २, २।
१६. एतद्वै संवत्सरस्य स्वं पयः यदाज्यम्। माश १, ५, ३, ५।
१७. एष वाव यज्ञो यदाज्यम्। तैसं २, ६, ३, १।
१८. एषा हि विश्वेषां देवानां तनूः। यदाज्यम्। तै ३, ३,४, ६।
१९. कस्मात्सत्याद्यातयामान्यन्यानि हवी ऽ ष्ययातयाममाज्यम्? प्राजापत्यम् (आज्यम्) इति ब्रूयात्। तैसं २, ६, ३, १-२।
२०. काम आज्यम्। तै ३, १, ४, १५; ५,१५; तैआ १०,६४, १।
२१. चित्तमाज्यम्। मै १, ९, १; तैआ ३, १, १।
२२. छन्दा ऽ सि वा आज्यम्। तै ३, ३, ५, ३।
२३. त (ऋषयः) एतैर् ('यद्देवा देवहेडनम्' इत्याभिः सूक्तैः) आज्यमजुहवुस्तेऽरेपसो ऽभवन्। काठसंक ९०,३।
२४. तदाहुः। किन्देवत्यान्याज्यानीति प्राजापत्यानीति ह ब्रूयादनिरुक्तो वै प्रजापतिरनिरुक्तान्याज्यानि। माश १, ६, १,२०।
२५. तेज (°जो वा [तैसं., तां.]) आज्यम्। तैसं २, ६, १, २; तां १२,१०,१८; तै १, ६,३,४; २,१,५,५;७, १,४; ३, ३, ४, ३; ९, ३।
२६. त्रैष्टुभमयनं भवत्योजस्कामस्याथकारणिधनमाज्येनामुष्मिँल्लोक उपतिष्ठते। तां १३,४,१०।
२७. देवलोको वा आज्यम्। कौ १६,५।
२८. पशव (प्राजापत्यम् [मै.]) आज्यम्। मै ४, ८, ९; तै १, ६, ३, ४।

२९. प्राणो ( मेधो [तै ३, ९, १२, १]) वा आज्यम् । तै ३, ८, १५, २-३;९,१२,१ ।

३०. महिष्यभ्यनक्ति । तेजो वा आज्यम् । तै ३, ९, ४, ६ ।

३१. य आज्यं ( अत्ति ) मज्जानं स ( अत्ति ) । काठ ३४, ११ ।

३२. यजमानो ( यज्ञो [तै ३, ३, ४, १]) वा आज्यम् । तै ३,३, ४,१;४ ।

३३. यदजो ऽविन्दत्तदाज्यस्याज्यत्वम् । काठ २४, ७; क ३७, ८ ।

३४. रस (व्रज [तैसं.]) आज्यम् । तैसं २,६,२,४; माश ३, ७, १, १३ ।

३५. रेत आज्यम् । माश १, ३, १, १८; ५,३,१६; तै ३, ८, २, ३ ।

३६. रेतो वा आज्यम् । काठसंक १५:१०; माश १, ९, २, ७; ३, ६,४,१५; ६,३,३,१८ ।

३७. वज्रो वा ( हि [माश १, ३, २, १७]) आज्यम् । तैसं ५, २, ७, ४; कौ १३, ७; तै ३, ८, १५, १; माश १,३,२,१७;४,४, ४; ५, ३, ४; ३, ३, १, ३; ४, ३, ११ ।

३८. वसन्तो अस्य ( ऽस्य [काठसंक.]) आसीदाज्यम् । काठसंक १००: १२; तैआ ३,१२, ३ ।

३९. वसव आज्येन ( सहागच्छन्तु ) । तैआ ३, ८, २ ।

४०. स ( प्रजापतिः ) आत्मन्नाज्यमधत्त । तैसं २, ६, ३, १ ।

४१. सत्यमाज्यम् (+सत्येन हीमे लोका आजित्याः [काश.]) । काश ३, १, ४, २; माश ११, ३,१,१ ॥ [°ज्य- अग्निहोत्र- ५०; अनडुह्- १०; अप्- ५९; अमृत- ५;३० द्र.] ।

आज्य-दोह- ज्येष्ठसामानि वा एतानि (आज्यदोहानि) श्रेष्ठसामानि प्रजापतिसामानि । तां २१,२,३ ।

आज्य-धानी-

१. दिश आज्यधानी । मै ४, १, ११; काठ ३१, १३ ।

२. ये यजामह इत्याज्यधानीम् ( युनक्ति ) । मै ४, १, ११; काठ ३१, १३ ।

आज्य-प- प्रयाजानुयाजा वै देवा आज्यपाः । काठ ३२, १; माश १, ५,३,२३; ९,१,१० ।

आज्य-भाग-

१. चक्षुर्वा (प्राणापानौ वा [काठ.]) आज्यभागौ । काठ २९,३; कौ ३, ५ ।

२. चक्षुषी वा एते यज्ञस्य यदाज्यभागौ । तैसं २, ६, २, १; मै १, ७, ४; काठ ९,२; क ८, ५; माश १, ६, ३, ३८; ११, ७, ४, २; १४, २,२,५२ ।

३. वज्र (द्वा [मै.]) आज्यभागौ । तैसं २, ६, २, ४; मै १,१०,८ ।

४. वायव्य आज्यभागः । तैसं ७,५,२१,१; तै ३,९,१७, ४;५ ॥ [°ग- अग्नीषोम- ७;३४ द्र.] ।

आज्याहुति- अथैषाज्याहुतिर्यद्धविर्यज्ञो यत्पशुः ( पशुयज्ञः ) । माश १, ७, २, १० ।

२आज्य (उक्थ-, शस्त्र-, स्तोत्र-)-

१. अदितिरपश्च बर्हिश्चादित्या आज्यैः । मै १, ९,२ ।

२. आज्येन वै देवाः सर्वान् कामानजयन्त्सर्वममृतत्वम् । कौ १४,१ ।

३. आत्मा वै यजमानस्याज्यम् । कौ १४,४ ।

४. आदित्या आज्यैः (उदक्रामन् ) । काठ ९, १० ।

५. किंदेवत्यान्याज्यानीति प्राजापत्यानीति ह ब्रूयात् । माश १,६,१, २० ।

६. चतुर्होतारं व्याख्यायाऽऽज्यैरुद्गायेत् । काठ ९,१४ ।

७. त आजिमायन् (देवाः) यदाजिमाय१स्तदाज्यानामाज्यत्वम् । तां ७,२,१ ।

८. तद्यद् (देवाः) इमाँल्लोकान् (आज्यैः) आजयंस्तदाज्यानामाज्यत्वम् । जै १, १०५ ।

९. तद्वा इदं षड्विधमाज्यं तूष्णींजपस्तूष्णींशंसः पुरोरुक्सूक्तमुक्थवीर्य्यं याज्येति । कौ १४,१ ।

१०. ते वा एते पशव एव यदाज्यानि (स्तोत्राणि) । जै १,१०६ ।

११. ते वै प्रातराज्यैरेवाजयंत आयन् यदाज्यैरेवाजयंत आयंस्तदाज्यानामाज्यत्वम् । ऐ २, ३६ ।

१२. यद् (देवाः) अब्रुवन्नाजिमेषामयामेति तदेषां (आज्यानाम्) द्वितीयमाज्यत्वम् । जै १,१०५ ।

१३. राज्यसि, प्राची दिग्, वसवस्ते देवा अधिपतयो ऽग्निर्हेतीनां प्रतिधर्ता, त्रिवृत्त्वा स्तोमः पृथिव्या१ श्रयत्वाज्यमुक्थमव्यथायै (°थाय [काठ.]) स्तभ्नातु (स्तभ्नोतु [मै.]) रथन्तर१ साम । मै २,८,९; काठ १७,८; क २६,७ ।

१४. वागेवाज्यम् । कौ २८,९ ।

१५. सर्वाणि स्वराण्याज्यानि (स्तोत्राणि) । तां ७, २,५ ॥ [°ज्य- अनुष्टुभ्- ११ द्र.] ।

आञ्जन-

१. इन्द्रो वृत्रमहन् तस्य कनीनिका पराऽपतत् तदाञ्जनमभवत् (···ऽपतत् सा त्रिककुभमगच्छत् सदाञ्जनं त्रैककुभमाङ्क्ते [मै.]) । तैसं ६, १,१,५; मै ३,६,३ ।

२. तेजो वा एतदक्ष्योर्यदाञ्जनम् । ऐ १,३ ।

३. वृत्रस्य ह्येष कनीनकः (यदाञ्जनम्) । माश ३, १,३,१५ ।

आण्ड-

१. आण्डाभ्या१ हि वृषा पिन्वते । माश १४,३,१,२२ ।

२. आण्डौ वै रेतःसिचौ, यस्य ह्याण्डौ भवतः स एव रेतः सिञ्चति । माश ७,४,२,२४ ।

३. वृषणा आण्डाभ्याम् (प्रीणामि) । मै ३,१५,१;९ ।

आतपवर्ष्या- तेजश्च ह ब्रह्मवर्चसं चाऽऽतपवर्ष्या आपः । ऐ ८,८ ।

आतान-

१. आदित्यस्य वै रश्मय आतानास्तेभ्य एव नमस्करोति । तैसं ६,३, ८, ३-४ ।

२. यज्ञो वाऽआतानः । माश ३,८,२,२ ।

आतिच्छन्दस- अतिच्छन्दस्- द्र. । आतिथ्य- अतिथि- द्र. ।

आतिष्ठ- अथैनम् (इन्द्रम्) ऊर्ध्वायां दिशि मरुतश्चाङ्गिरसश्च देवा··· अभ्यषिञ्चन्···पारमेष्ठ्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठाय । ऐ ८,१४ ।

आतीषादीय- अतिषद्- द्र. ।

आत्मन्-

१. अथ यो हैवैतमग्नि१ सावित्रं वेद । स एवास्माल्लोकात्प्रेत्यात्मानं वेद । अयमहमस्मीति । तै ३, १०, ११, १ ।

२. अथोद्गाता (प्रतिपद्यते), आत्मैव प्रजापतिर्यज्ञस्य । माश ४, २, ५, ३ ।

३. अविनाशी वाऽरेऽयमात्मानुच्छित्तिधर्मा । माश १४, ७, ३, १५ ।

४. आत्मनः पृथिवी१ सन्तनु । काठ ३९, ८ ।

५. आत्मनि ब्रह्म (प्रजापतिरावेशयत्) । शांआ ११, १ ।

६. आत्मनो वाऽङ्गानि सर्वाण्यङ्गानि प्रभवन्ति । माश ४, २, २, ५ ।
७. आत्मनो वाऽरे दर्शनेन श्रवणेन मत्या विज्ञानेनेद ँ सर्वं विदितम् । माश १४, ५, ४, ५ ।
८. आत्मनो ह्येवाध्यङ्गानि प्ररोहन्ति । माश ८, ७, २, १५ ।
९. आत्मन्नङ्गानि प्रतिहितानि । जै २,४०८ ।
१०. आत्मा च मे तनूश्च मे ( यज्ञेन कल्पताम् ) । तैसं ४, ७, १, २ ।
११. आत्मा (+वै ⌊माश ६, ४, २, ६⌋) त्रिष्टुप् । माश ६, २, १, २४; ६, २, ७ ।
१२. आत्मा देवता ( ध्रुवा ⌊ तैसं., तै.⌋ ) । तैसं २,५,११,७; मै १,१०, ८; तै ३,३,१,५;७,१० ।
१३. आत्मा (+वै ⌊मै., क.⌋) देवयजनम् । मै ३,८,४; क ३८,६; गो १, २,१४ ।
१४. आत्मानमेव पङ्क्त्या प्रत्युपदधाति ( °पादधात् ⌊जै १, ९९⌋ ) । जै १, २५३ ।
१५. आत्मानमेवाग्निष्टोमेन स्पृणोति । काठ १४, ९ ।
१६. आत्मा पङ्क्तिः (उपांशुसवनः ⌊ऐ.⌋) । ऐ २, २१; जै २, ५८ ।
१७. आत्मा पञ्चमी ( चितिः ), ( + प्रजा पुरीषम् ⌊माश.⌋) । काठ २२, ४; माश ८, ७,४,१६ ।
१८. आत्मा ( +वै ⌊कौ.⌋) पशुः । तैसं ६,३, ७, ३; काठ २६,८; कौ १२, ७ ।
१९. आत्मा प्रजा चोद्गातारम् ( अनुवर्तन्ते ) । ष २, ८ ।
२०. आत्मा महदुक्थम् । माश १०, १, २, ५ ।
२१. आत्मा यजमानः । कौ १७,७; गो २,५, ४; तैआ १०, ६४, १ ।
२२. आत्मा वपा ( + पशोः ⌊मै.⌋) तैसं ६, ३, ९, ६; मै ३, ९, ८; १०, १; कौ १०, ५ ।
२३. आत्मा वा आहवनीयः (एककपाल ⌊काठ ३६,१⌋) । काठ २१, ४; क ३१, १८ ।
२४. आत्मा वै जुहूः ( तनूः ⌊माश.⌋ ) । मै ४, १,१२; माश ६, ७,२, ६; ७,३,१,२३;५,२,३२ ।
२५. आत्मा (+ह खलु ⌊जै १,३०७⌋) वै निधनम् । जै १, १२३; ३०७ ।
२६. आत्मा वै पञ्चविंशः (पशोर्वपा ⌊काठ., क.⌋) काठ २६,९; क ४१,७; शांआ २,१ ।
२७. आत्मा वै पुरुषः (°षस्य मधु ⌊तैसं.⌋) । तैसं २,३,२,९; क ३१,७ ।
२८. आत्मा ( शरीरम् ) वै पूः । माश ७,५,१,२१ ।
२९. आत्मा वै पृष्ठ्यः षडहः । जै २,३०५;३०६ ।
३०. आत्मा वै प्रयाजाः, प्रयाजाऽनुयाजाः (प्रजानु° ⌊काठ.⌋) । मै ३,७,२; काठ २३,९ ।
३१. आत्मा वै बृहती (ब्राह्मणाच्छंसी ⌊कौ.⌋) । ऐ ६,२८; कौ २८,९; गो २,६,८ ।
३२. आत्मा वै यज्ञस्य होता । कौ ९, ६ ।
३३. आत्मा वै यज्ञायज्ञीयं, तनूर्वामदेव्यम् । काठ २१,५; क ३१, २० ।
३४. आत्मा वै वामदेव्यम् (साम) । मै ३,३,५ ।
३५. आत्मा वै वृषाकपिः (वेनः ⌊कौ.⌋) । ऐ ६,२९; कौ ८, ५; गो २,६,८ ।
३६. आत्मा वै समस्तः सहस्रवांस्तोकवान् पुष्टिमान् । ऐ २,४० ।
३७. आत्मा वै स्तोत्रियः (स्तोत्रम् ⌊माश.⌋) । ऐ ३,२३;२४; ६, २६; कौ १५,४; २२,८; गो २, ३,२२; माश ५,२,२,२ ।
३८. आत्मा वै स्तोत्रियानुरूपौ । कौ ३०, ८ ।

३९. आत्मा वै स्वरः (सूक्तम् ⌊कौ.⌋) । कौ १४,४;१५,३;१६,४; २३,८; जै १,३०० ।
४०. आत्मा वै होता (हविः ⌊काठ.⌋) । काठ ८,५; ऐ ६,८; कौ २९,८; गो २,५,१४; ।
४१. आत्मा हरित ९ हिरण्ययम् । काठ १०,४ ।
४२. आत्मा हि प्रथमः सम्भवतः सम्भवति । माश १०,१, २, ४ (तु. माश ७,१,१,२१) ।
४३. आत्मा हि वरः । मै १,१०,७; ४,३,४;६,६; काठ २८,५; तै ३, १२,५,७; तैआ २,१६, ३ ।
४४. आत्मा हृदयम् (हृदये ⌊तै., शांआ.⌋) । मै ३, १०, २; तै ३,१०, ८,९; शांआ ११,६ ।
४५. आत्मा होतृचमसः । ऐ २,३० ।
४६. आत्मा ह्ययं प्रजापतिः । माश ४,६,१,१; ११, ५, ९, १ ।
४७. आत्मा ह्युपहूतानां वसिष्ठः । तैसं २, ६,७, ३ ।
४८. आत्मैव वेदिः (स्तोत्रियः ⌊जैउ.⌋) । माश १२,९,१,११; जैउ ३,१,४,३ ।
४९. आत्मैवोखा । माश ६,५,३,४;६,२,१५ ।
५०. आपतये त्वा गृह्णामीत्यात्मानमेव तेन गृह्णाति । मै ३,७, १० ।
५१. एतन्मयो वाऽअयमात्मा वाङ्मयो मनोमय प्राणमयः । माश १४,४,३,१० ।
५२. एतावान् (अरत्निमात्रः) ह्यात्मा । काठसंक १६ : ७ ।
५३. एष वै कृत्स्न आत्मा यद् बृहती···यथायमात्मा सर्वतः शरीरैः (अङ्गैः) परिवृत एवमेव बृहती सर्वतश्छन्दोभिः परिवृता । मध्यं ह्येषामङ्गानामात्मा, मध्यं छन्दसां बृहती । ऐआ २, ३, ५ ।
५४. चतुर्विधो ह्ययमात्मा । माश ७, १, १, १८ ।
५५. तत्सर्व आत्मा वाचमप्येति वाङ्मयो भवति (आत्मा = शरीरम्) । कौ २, ७ ।
५६. तदु ह वा आत्मा द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति, तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चेति माण्डूकेयः । शांआ १३, १ ।
५७. तस्मादय ९ सर्व एवात्मोष्णस्तद्धैतदेव जीविष्यतश्च मरिष्यतश्च विज्ञानमुष्ण एव जीविष्यञ्छीतो मरिष्यन् (आत्मा=शरीरम्) । माश ८, ७,२,११ ।
५८. तस्मादितर आत्मा मेद्यति च कृश्यति च । तां ५, १, ७ ।
५९. तस्मादिमान्यन्वञ्चि च तिर्यञ्चि चात्मनस्थीनि (आत्मा=शरीरम्) । माश ८, ७, २, १० ।
६०. त्रिष्टुप्स्वात्मा (भवति) । जै २, ४७ ।
६१. दश पाण्या अङ्गुलयो, दश पाद्या, दश प्राणा, आत्मैकत्रि ९ शः । माश ३,१,४, २३ ।
६२. नमस्ते राजनाथ (साम्ने) यस्त आत्मेति । ऐआ ५, १, २ ।
६३. पञ्चविंश आत्मा······दश हस्त्या अङ्गुलयो दशपाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशः । ऐआ १, १, ४ ।
६४. पाङ्क्त इतर आत्मा (शरीरम्) लोमत्वङ्मा ९ समस्थि मज्जा । तां ५, १,४ ।
६५. प्राणेभ्यो वा आत्मा सम्भवति आत्मनो वा प्राणाः (आत्मा = देहः, मध्यदेहः) । जै १, ३५३ ।
६६. बार्ह्यो ह्यात्मा । माश ६, ६, २, १६ ।
६७. भूमोऽएषोऽङ्गानां यदात्मा । माश ६, ६, १, १० ।

६८. मध्यतो ह्ययमात्मा । माश ६, २, २, १३; ८, १,४,३ ।

६९. मह इति । तद् ब्रह्म । स आत्मा । अङ्गान्यन्या देवताः । तैआ ७,५,१; तैउ १, ५,१ ।

७०. य आत्मानं न परिपश्येदितासुः स्यात् । तैसं ६, ६, ७, २ ।

७१. यत्पशुमालभत आत्मानं तेन निष्क्रीणाति । काठ २४ ७ ।

७२. यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन्पुरुषो हिरण्मयो यथा ज्योतिरधूममेवं ज्यायान्दिवो ज्यायानाकाशाज्ज्यायानस्यै पृथिव्यै ज्यायान्त्सर्वेभ्यो भूतेभ्य स प्राणस्यात्मैष मऽआत्मैतमित आत्मानं प्रेत्याभिसम्भविष्यामीति । यस्य स्यादद्धा न विचिकित्सास्तीति । माश १०, ६, ३, २ ।

७३. यदिन्द्रायेन्द्रियावते ( निर्वपति ), आत्मानमेवास्य तेन करोति । तैसं २, २, ७, ३ ।

७४. यदि ( होता ) वृषाकपिम् ( वृषाकपिदृष्टम् ) आत्मानम् ( मध्यदेहम् ) अस्य ( यजमानस्य ) अन्तरियात् । ऐ ५, १५ ।

७५. यश्चायमध्यात्म ँ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव योऽयमात्मेदममृतमिदं ब्रह्मेद ँ सर्वम् । माश १४, ५, ५, १ ।

७६. यावती वै द्यावापृथिवी तावानात्मा । ऐआ १, ३, ८ ।

७७. यो घोषः स आत्मा । ऐआ २, २, ४ ।

७८. वाक् चात्मा च सप्तहोता । मै १, ९, ५; काठ ९, १३ ।

७९. वाचमन्वात्मा ( अस्ति ) । जै १, १६ ।

८०. वाचे चात्मने च क ँ सौम्यो ऽध्वर इज्यते । काठ ९, १३ ।

८१. वातः प्राणस्तदयमात्मा । काठ ७, १४; क ६, ४ ।

८२. वातम् ( ते ) आत्मा ( गच्छतु ) । तैआ ६, १, ४ ।

८३. वामदेव्यम् (संवत्सर [तैसं.]) आत्मा । तैसं ७, ५,२५, १; जै १, २९२ ।

८४. शीर्ष्णोद्गाता प्रतिपद्यत आत्मना होता । जै २, ४६ ।

८५. षडङ्गोऽयमात्मा षड्विधः । कौ २०, ३ ।

८६. स एष नेति नेत्यात्मा न गृह्यः ······इदं सर्वं यदयमात्मा, स एष तत्त्वमसीत्यात्माऽवगम्योऽहं ब्रह्मास्मीति······अयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनमिति याज्ञवल्क्यः । शांआ १३, १ ।

८७. स पञ्चवि ँ श आत्मा । माश १०, १, २,८ ।

८८. सप्तपुरुषो ह्ययं पुरुषो यच्चत्वार आत्मा त्रयः पक्षपुच्छानि । माश ६, १, १, ६ ।

८९. स योऽतो ऽश्रुतो ऽगतो ऽमतो ऽनतो ऽदृष्टो ऽविज्ञातो ऽनादिष्टः श्रोता मन्ता द्रष्टादेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः स म आत्मेति विद्यात् । ऐआ ३, २,४ ।

९०. सर्वं ँ ह्ययमात्मा । माश ४, २, २, १ ।

९१. सात्मा ऽ मुष्मिं ँ ल्लोके भवति य एवं वेद । तैसं ५, ३,५, २ ।

९२. स्तोम (वायुर् [तैआ.]) आत्मा । तैसं ४,१,१०,५; मै २,७,८; काठ १६,८; तैआ २,१४,१ ।

९३. हृदयमात्मनि ( प्रतिष्ठितम् ) । शांआ ११, ६ ।

[ °त्मन्- अग्नाविष्णु- १; अग्नि- ३२०; अग्निचयन- ३; अनुयाज- ३; अनुष्टुभ्- २५; अन्तरिक्ष- ८;५२;८९;९०; अवान्तर्दीक्षा-; आकाश- ४;८; आग्नेय- २६; आग्रयण- ५;६; आग्रायण- ३; आघार- ४; १आज्य- ११; २आज्य- ३ द्र. ] ।

**आत्म-याजिन्-** तदाहुः । आत्मयाजी श्रेया३न् देवयाजी३ ऽ इत्यात्मयाजीति ह ब्रूयात्स ह वा आत्मयाजी यो वेदेदं मे ऽनेनाङ्ग ँ संस्क्रियत ऽ इदं मे ऽनेनाङ्गमुपधीयत ऽ इति स यथा ऽहिस्त्वचो निर्मुच्येतैवमस्मान्मर्त्याच्छरीरात्पाप्मनो निर्मुच्यते स ऋङ्मयो यजुर्मयः साममय आहुतिमयः स्वर्गं लोकमभिसम्भवति । माश ११, २, ६, १३ ।

**आत्मेय-** सो ( अग्निः ) ऽपो ऽङ्गारेणाभ्यपातयत् । तत एकतोऽजायत । द्वितीयम् । ततो द्वितः ( अजायत ) । तृतीयम् । ततस्त्रितः (अजायत) । यदात्मनो निरमिमीत तदात्मेयाना- मात्मेयत्वम् । क ४७, ७ (तु. मै ४, १, ९; माश १, २,३,१) ।

**आत्रेयी** (रजस्वला-)-

१. तस्मादप्यात्रेय्या योषिता ( सह सम्भाषणादि कुर्वन् पुरुषः ) एनस्वी ( भवति ) । माश १, ४, ५, १३ ।

२. परःसहस्रा हास्य ( अत्रेः ) प्रजायां मन्त्रकृत आसुरपि हास्य स्त्रियो मन्त्रकृत आसुस्त- स्माद्यो ऽप्यात्रेयीं स्त्रियं हन्ति तं पर्येव चक्षते । जै २, २१९ ।

**आथर्वण**- अथर्वन्- द्र. ।

**आदार**-

१. गायत्रीय ँ सोममाहरत्तस्य योंऽशुः परापतत्त आदारा अभवन् । तै १,४,७,५-६ ।

२. यत्र वाऽएनम् ( विष्णुं [यज्ञं] ) इन्द्र ओजसा पर्यगृह्णात्तदस्य परिगृहीतस्य रसो व्यक्षरत्स पृथिवीमशेत सोऽब्रवीदादीर्येव बत मऽएष रसोऽस्तौषीदिति तस्मादादारा अथ यत्पूयन्निवाशेत तस्मात्पूतीकास्तस्मादग्नावाहुतिरिवाभ्याहिता ज्वलन्ति तस्मादु सुरभयो यज्ञस्य हि रसात्सम्भूताः । माश १४, १,२, १२ ।

३. यत्र वै यज्ञस्य शिरो ऽच्छिद्यत तस्य यो रसो व्यप्रुष्यत्तत आदाराः समभवन् । माश ४, ५, १०, ४ ।

**आदि** ( सामन्- )-

१. अथ यत्प्रतीच्यां दिशि तत्सर्वमादिनाप्नोति । जैउ १, १०, १, ५ ।

२. आदिं वयोभ्यः (प्रजापतिः प्रायच्छत्) । जैउ १, ३, १, ७ ।

३. आसंगवम् (इन्द्र [जैउ १,१८,३,९] आदिः । जैउ १, ३, १, ४; १८,३,९ ।

४. इम एव लोका आदिः । जैउ १, ५, १, २ ।

**आदित्य**-

१. अग्निमयो ह वै पुनर्णवो भूत्वा स्वर्गं लोकमेति । आदित्यस्य सायुज्यम् । योऽग्निं नाचिकेतं चिनुते । तै ३,११, १०,४ ।

२. अग्निश्च ह वा आदित्यश्च रौहिणावेताभ्या ँ हि देवताभ्यां यजमानाः स्वर्गं लोक ँ रोहन्ति । माश १४,२,१,२ ।

३. अथ य एष एतस्मिन् (आदित्य-) मण्डले पुरुषः सोऽग्निस्तानि यजूꣳषि स यजुषां लोकः। माश १०, ५,२,१।

४. अथ यज्ञायज्ञीयम्। स ह स नाक एव स्तोमः। आदित्य एव सः। एष हि न कस्मै चनाकमुदयति। जै १,३१३।

५. अथ यत्तच्चक्षुरासीत् स आदित्योऽभवत्। जैउ २,१,२,३।

६. अथ यद्विषुवन्तमुपयन्ति। आदित्यमेव देवतां यजन्ते। माश १२,१,३,१४।

७. अथात उत्तरपक्षः। सोऽसौ (द्यु-) लोकः सोऽसावादित्यस्तन्मनस्तद् बृहत् स भरद्वाजः। ऐआ १,४,२।

८. अथेमं विष्णुं यज्ञं त्रेधा व्यभजन्त। वसवः प्रातःसवनꣳ रुद्रा माध्यन्दिनꣳ सवनमादित्यास्तृतीयसवनम्। माश १४,१,१,१५।

९. अथैनं (इन्द्रम्) प्रतीच्यां दिश्यादित्या देवाः··· अभ्यषिञ्चन्···स्वाराज्याय। ऐ ८,१४।

१०. अथैष वाव यशः य एष (आदित्यः) तपति। माश १४,१,१,३२।

११. अद उ एव बृहद् भुवनेष्वन्तरसावादित्यः। ऐआ २, १,१।

१२. अदितिर्वै प्रजाकामौदनमपचत्तत उच्छिष्टमाश्नात् सा गर्भमधत्त तत आदित्या अजायन्त। गो १,२,१५।

१३. अदो यद्म (अदस्सत्यम्) इत्यादित्यम् (उपदिशन्)। जै १,२३।

१४. अमुम् (आदित्यम्) आहुः परं मृत्युं पवमानं तु मध्यमम्। तैआ १,८,४,।

१५. अमुष्मिन्नादित्ये देवानां प्रियास्तन्वः। काठ २७,१; क ४२,१।

१६. अयं वाऽअग्निर्ऋतमसावादित्यः सत्यं, यदि वासावृतमयꣳ सत्यमुभयम्वेतदयमग्निः। माश ६,४,४,१०।

१७. अयं वा आदित्यः श्रेष्ठो रश्मिः। मै ४,६,६।

१८. अयातयामा ह्यसावादित्यः। तैसं ५,७,५,६-७।

१९. अर्वाङसावादित्यस्तपति। जै १,२४७।

२०. अष्टाचत्वारिंशदादित्या देवाः। जै १,३६।

२१. अष्टौ ह वै पुत्रा अदितेः। यांस्त्वेतद्देवा आदित्या इत्याचक्षते सप्त ह वै तेऽविकृतꣳ हाष्टमं जनयांचकार मार्तण्डम्। माश ३,१,३,३।

२२. असा (असौ वा ⌊तैसं.⌋) आदित्य उद्यन्नुद्ग्राभ एष निम्रोचन् निग्राभः। तैसं ५,४,६,६-७; काठ २१,८।

२३. असा आदित्य एकविंशः (+एष सविता ⌊काठसंक.⌋)। मै २. ३,३; काठसंक ६ : ४।

२४. असा आदित्यः प्राङ् चैति प्रत्यङ् च। काठ २०,४।

२५. असा आदित्यः शिरः। मै ४, २,२;८,१०; काठ ३०, ५।

२६. असा आदित्यः शुक्रश्चन्द्रमा मन्थी। मै ४, ६, ३।

२७. असा आदित्यः सुवः (°त्य इन्द्रः ⌊मै ४,७,३⌋)। मै ४, १,११;१२;७,३; काठ ३१, ५।

२८. असावादित्य एकविंशः (+एतस्मिन्नेव तत्स्वर्गे लोकेऽन्ततः प्रतितिष्ठन्ति ⌊जै २, ४२५,⌋)। क ४१,२; जै २, ३८६;४२५।

२९. असावादित्य एकविंशो विषुवान्, तस्य दिवाकीर्त्यानि(सामानि)एव रश्मयः। जै २,३९०।
३०. असावादित्यः शिरः प्रजानाम्। तै १, २, ३, ३।
३१. असावादित्यः षोडशी (°त्य आहवनीयः [मै.])। मै ४,५,५; माश ८, ५,१,१०।
३२. असावादित्यः सत्यम् ( सुब्रह्म [ष.] )। तै २, १, ११, १; ष १, १।
३३. असावादित्यः स्तोमभागाः। माश ८, ५,४,२।
३४. असावादित्यो देवः सविता। माश ६, ३, १, १८।
३५. असावादित्यो ( असौ वा आदि° [माश.] ) ब्रह्म (+ असौ द्यौर्ब्राह्मणी [शांआ.])। माश ७, ४,१,१४; १४, १, ३, ३; शांआ १, ५।
३६. असावादित्यो वेनो यद्वै प्रजिजनिषमाणो ऽवेनत्तस्माद्वेनः। माश ७, ४, १, १४।
३७. असावेव संवत्सरो योऽसौ ( आदित्यः ) तपति। जै २, २८।
३८. असावेवास्मादादित्य उद्यन्पुरस्ताद्रक्षा ँ स्यपहन्ति। काठ ३१, १०; क ४७,१०।
३९. असौ खलु वा आदित्य इतो वृष्टिमुदीरयति। तैआ ५, १०, ६।
४०. असौ खलु वा आदित्यः प्रवर्ग्यः ( +तस्य मरुतो रश्मयः [तैआ ५,४,८] )। तैआ ५,९,२।
४१. असौ खलु वा आदित्यः सुवर्गो लोकः। तैआ ५, ९, ११।
४२. असौ गतिरित्यादित्यम् ( उपदिशन् )। जै १, २५।
४३. असौ वा अस्य ( अग्निहोत्रस्य कर्तुः ) आदित्यो यूपः। ऐ ५, २८।
४४. असौ वा आदित्य इन्द्रः (+ एष प्रजापतिः [तैसं ५, ७,१,३; काठ २२, ८ ])। तैसं १, ७, ६,३;५,७,१,३; मै १, १०, १६; काठ १३, ७; २२,८;२४, ९।
४५. असौ वा आदित्य उद्ग्राभ, एष निग्राभ, उद्यन्वा एतद्यजमानमुद्गृह्णाति, निम्रोचन्नस्य भ्रातृव्यं निगृह्णाति। मै ३, ३, ८।
४६. असौ वा आदित्य एकाकी चरति। तै ३, ९, ५, ४।
४७. असौ वा ऽ आदित्य एष रथः। माश ९, ४, १, १५।
४८. असौ वाऽ आदित्य एष रुक्मः (+ एष हीमाः सर्वाः प्रजा अतिरोचते [माश ७, ४, १, १०] )। माश ६, ७, १,३;७,४,१,१०।
४९. असौ वा आदित्य एषो ऽग्निः ( ऽश्वः [माश ६, ३, १, २९] )। माश ६, ३, १, २९; ४,१,१;३, ९; १०।
५०. असौ वा आदित्यः कविः (एष रथः [ माश ९,])। माश ९,४,१,१५;६, ७, २, ४।
५१. असौ वा आदित्यः पाप्मनो ऽपहन्ता। माश १३, ८,१,११।
५२. असौ वा आदित्यः प्राणः। तैसं ५, २, ५, ४।
५३. असौ वा आदित्यः शुक्रः (+चन्द्रमा मन्थी [काठ.])। तैसं ७,२,७,२; मै ४, ६,८;८, ८; काठ २७, ८; क ४४,२; ४५, १; ४६, ६; तां १५,५,९; माश ९, ४, २,२१।
५४. असौ वा आदित्यश्शुचिरेष तेजसः प्रदाता। काठ ८, ८।
५५. असौ वाऽ आदित्यः स ँ हितः एष ह्यहोरात्रे संदधाति। माश ९, ४, १, ८।
५६. असौ वा आदित्यः सायमासुवति,··· एष प्रातः प्रसुवति। मै १,५,७।
५७. असौ वा ऽआदित्यः सूर्यः। माश ९, ४, २,२३।

५८. असौ वा आदित्यः स्वर्गो लोकः ( °त्यः तपः [माश.]) । मै ३, ६, १; माश ८, ७,१,५ ।
५९. असौ वा आदित्यो गोपः । तैआ ५, ६, ४ ।
६०. असौ वा आदित्यो घर्म एष इन्द्र, एष ब्रह्मवर्चसस्य प्रदाता । काठ १०, ८ ।
६१. असौ वा आदित्यो ज्योतिरुत्तमम् ( °तिर्वैश्वानरम् [मै.] ) । तैसं ५,१,८,६-७; मै ३, ९,१; ४, १, ५; काठ २२, १ ।
६२. असौ वा ऽ आदित्यो दिव्य ९ रोचनम् ( दिव्यो गन्धर्वः ) । माश ६,२, १, २६ ।
६३. असौ वा आदित्यो दूडभो रथः (देवानां चक्षुः [मै ४, २, १ ]) । मै १, ५, ११;४,२,१ ।
६४. असौ वाऽ आदित्यो द्रप्सः ( ब्रध्नः [तै.] ) । तै ३, ९, ४, १; माश ७,४,१,२० ।
६५. असौ वा आदित्यो ब्रध्नस्य विष्टपम् । तैसं ५, ३, ३,५ ।
६६. असौ वाऽ आदित्यो ब्रह्म ( + वर्चसस्य प्रदाता [मै.] ) । मै २, ५, ७; ११; जै २, ७८; माश ७, ४, १, १४; १४, १, ३, ३ ।
६७. असौ वा आदित्यो भा इति । जै १, ३३०; जैउ १, १, ४, १ ।
६८. असौ वा आदित्यो रुचः प्रदाता । काठ १३,८ ।
६९. असौ वा आदित्यो ऽरुषः । माश १३, २, ६, १ ।
७०. असौ वाऽ आदित्यो लोकम्पृणा (इष्टका), ( +एष हीमांल्लोकान्पूरयति [माश ८,७,२,१.] ) । माश ८, ५, ४, ८;७,२,१; ।
७१. असौ वाऽ आदित्यो विवस्वानेष ह्यहोरात्रे विवस्ते तमेष ( मृत्युः ) वस्ते सर्वतो ह्यनेन परिवृतः । माश १०,५,२,४ ।
७२. असौ वाऽ आदित्यो विश्वव्यचाः यदा ह्येवैष उदेत्यथेद ९ सर्वं व्यचो भवति । माश ८, १, २, १; ६, १, १८ ।
७३. असौ वा आदित्यो वृषाश्वः ( व्यचश्छन्दः [माश.] ) । माश ८, ५,२,३; तैआ ५, ३,५ ।
७४. असौ वा आदित्यो ऽस्तं यन् षोढा विम्रोचति । न्यम्रुचदिति ह स्म वा एतं पूर्वे पुराणिन आचक्षते । अथैतर्हि न्यम्रुचदिति । स वा एषो ऽस्तं यन् ब्राह्मणमेव श्रद्धया प्रविशति पयसा पशूंस्तेजसा ऽग्निमूर्जौषधी रसेनापस्स्वधया वनस्पतीन् । जै १, ७ ।
७५. असौ वा आदित्यो ह ९ सः शुचिषत् । माश ६, ७, ३, ११ ।
७६. असौ वा आदित्यो हरिकेशः सूर्यरश्मिः पुरस्तात् । मै ३, ३, ८ ।
७७. असौ वा आदित्यो हृदयम् । माश ९, १, २, ४० ।
७८. असौ वै घर्मो ( वैश्वानरो [कौ ४, ३; १९, २.]) यो ऽसौ ( आदित्यः ) तपति । कौ २, १; ४,३;१९,२ ।
७९. असौ वै षोडशी योऽसौ (आदित्यः) तपति । कौ १७,१ ।
८०. असौ (आदित्यः) वै स्पार्हः । जै २,३८९ ।
८१. आदित्यं हि तृतीयसवनम् । तां ९, ७,७ ।
८२. आदित्य उदयनीयः (उद्गीथः [जैउ.]) । माश ३,२,३,६; जैउ १,११,१, ५ ।
८३. आदित्य उपव्याता । काठसंक १२२ : ३ ।
८४. आदित्य एव चरणं यदा ह्येवैष उदेत्यथेद ९ सर्वं चरति । माश १०, ३, ५, ३ ।

८५. आदित्य एव प्रायणीयो भवति । माश ३,२,३,६ ।
८६. आदित्य एव यशः (सविता [गो १,१,३३; जैउ.] ) । गो १,१,५;३३; जैउ ४,१२,१,११ ।
८७. आदित्य एषां भूतानामधिपतिः । ऐ ७,२० ।
८८. आदित्यः प्रायणीयः स्यादादित्य उदयनीयः । मै ३,७,२ ।
८९. आदित्यं चरुं निर्वपति वरो दक्षिणा । तैसं १,८,१,१ ।
९०. आदित्यं चरुं महिष्यै गृहे धेनुर्दक्षिणा । तैसं १,८, ९, १ ।
९१. आदित्यममुष्यै (दिवे प्रजापतिः वत्सं प्रायच्छत्) । जै ३,१०७ ।
९२. आदित्यं प्रायणीयं भवत्यादित्यमुदयनीयम् । काठ २३, ८ ।
९३. आदित्यश्चक्षुषि (प्रतिष्ठितः) । शांआ १०,१ ।
९४. आदित्यश्चरुर्महिष्या गृहे (+ धेनुर्दक्षिणा [मै २,६,५]) । मै २,६,५; ४, ३,८ ।
९५. आदित्यः शुक्र उदगात् पुरस्ताज्ज्योतिः कृण्वन् वि तमो बाधमानः । आभासमानः प्रदिशोऽनु सर्वा भद्रस्य कर्त्ता रोचमाना आगात् । मै ४,१४,१४ ।
९६. आदित्यस्त्रिपात्तस्येमे लोकाः पादाः । गो १,२,९ ।
९७. आदित्यस्त्वेव सर्वऽऋतवः । यदैवोदेत्यथ वसन्तो यदा संगवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ वर्षा यदापराह्णोऽथ शरद्यदैवास्तमेत्यथ हेमन्तः । माश २,२,३,९ ।
९८. आदित्यस्य (रूपम्) रुक्मः (स्वराः [ऐआ.]) । तै ३,९, २०,२; ऐआ ३,२,५ ।
९९. आदित्यस्यावृतमन्वावर्तन्त इति दक्षिणं बाहुमन्वावर्तते । कौउ २, ९ ।
१००. आदित्या अस्मिँल्लोक (मनुष्यलोके) ऋद्धा आदित्या अमुष्मिन् (देवलोके) । तां २४,१२,७ ।
१०१. आदित्या (+ वा [मै., तां.]) इमाः प्रजाः । मै २, २,१; ३, ७,१;४, ४,५; काठ १९,९; तां १३,९,५; १८,८,१२ ।
१०२. आदित्या एव यशः । गो १,५,१५ ।
१०३. आदित्याः पञ्चदशम् (उदजयन्) । काठ १४,४ ।
१०४. आदित्याः पञ्चदशाक्षरया पञ्चदशं मासमुदजयन् । मै १,११,१० ।
१०५. आदित्याः पञ्चदशाक्षरेण पञ्चदश ँ स्तोममुदजयन् । तैसं १,७, ११,२ ।
१०६. आदित्याः पश्चात् (पर्यविशन्) । जै २, १४२ ।
१०७. आदित्याः प्रतीचीं (दिशमुदजयन्) । मै ४,१,१० ।
१०८. आदित्याः प्रपितामहाः (+ तृतीयलोकाधिपतयः [काठसंक १४१:१५]) । काठसंक ५४:४; १४०:१२-१३;१४१:१५ ।
१०९. आदित्याजा मलिहा गर्भिणी । मै ४,४,९ ।
११०. आदित्याञ् इम (छूम [काठ.] ) श्रुभिः (प्रीणामि) । मै ३, १५, १; काठ ५३,२ ।
१११. आदित्या दक्षिणाभिः (सहागच्छन्तु) । तैआ ३, ८, २ ।
११२. आदित्यानां वा एतद्रूपम् यल्लाजाः । तै ३, ८, १४, ४ ।
११३. आदित्यानां जगती (पत्नी) । तैआ ३,९,१ ।
११४. आदित्यानां तृतीयसवनम् । कौ १६,१;३०,१; माश ४,३,५,१ ।
११५. आदित्यानां तृतीया । तैसं ५,७,१७,१; मै ३,१५,६; काठ ५३,७ ।

११६. आदित्यानां भागोऽसि, मरुतामाधिपत्यम् । तैसं ४,३,९,२; ५,३,४,३; मै २,८,५; काठ २१ १।

११७. आदित्यानीमानि यजूꣳषीत्याहुः । माश ४,४,५,१९ ।

११८. आदित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते । माश १४,९,४,३३ ।

११९. आदित्यान् वाऽनु गावः (ग्रावाणः [माश ४,३,५,१९]) । माश ४,३,५,१९;२२ ।

१२०. आदित्यान्वाऽअनु पशवः । माश ४,३,५,१३ ।

१२१. आदित्यामजामधो रामां मेषीं वा । काठ १३, १ ।

१२२. आदित्यां मह्लां गर्भिणीमालभते । तैसं १, ८,१९,१ ।

१२३. आदित्याय चरुं निर्वपति तस्मिन्छतमानं हिरण्यं ददाति सुवर्णम् । जै २, ९८ ।

१२४. आदित्या वा अपरोद्धार आदित्या अवगमयितारः । तैसं २,३,१,१ ।

१२५. आदित्या वा इत उत्तमाः सुवर्गं लोकमायन् । ते वा इतो यन्तं प्रतिनुदन्ते । तै १,१,९, ८ ।

१२६. आदित्या वै ग्रावाणः ( देवविशाः [काठ.]) । काठ ११,६; काश ५,४, २,१० ।

१२७. आदित्या वै त्रातार आदित्या अपरोद्धारः । काठ ११, ६ ।

१२८. आदित्या वै देवतया विट् । तैसं २, ३,१,३ ।

१२९. आदित्या वै पशवः (प्रजाः [तै.]) । काठ २४,४; तै १,८,८, १ ।

१३०. आदित्याश्चाङ्गिरसश्चैतत् सत्रꣳ समदधतादित्यानामेकविꣳशतिरङ्गिरसां द्वादशाहः । तां २४,२,२ ।

१३१. आदित्यास्त्वा जागतेन छन्दसा संमृजन्तु । तां १,२,७ ।

१३२. आदित्यास्त्वा पश्चादभिषिञ्चन्तु जागतेन छन्दसा । तै २,७,१५, ५ ।

१३३. आदित्यास्त्वा पुनन्तु (परिगृह्णन्तु [मै.]) जागतेन छन्दसा । मै १, १, १०; क ३९, २; जै १, ७३ ।

१३४. आदित्यास्त्वा प्र वृहन्तु जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहि । तैसं ३,३,३,१ ।

१३५. आदित्यास्त्वा प्रोहन्तु (संमृजन्तु [जै १,८१]) । जागतेन छन्दसा । जै १, ७८;८१ ।

१३६. आदित्यास्त्वा विश्वैर्देवैः पश्चात् पान्तु । तैसं ५,५,९,४ ।

१३७. आदित्याः स्वाराज्याय (आदित्यमभ्यषिञ्चन्त) । जै २, २५ ।

१३८. आदित्याः स्वाराज्याय (वरुणमभ्यषिञ्चन्त) । जै ३, १५२ ।

१३९. आदित्या हि पुनराधेयम् । मै १,७,५ ।

१४०. आदित्येनासौ (द्युलोको ज्योतिष्मान् ) । जै १,२३२ ।

१४१. आदित्ये बृहत् (साम) । शांआ ६,२; कौउ ४, २ ।

१४२. आदित्येभिर्देवेभिर्देवतया जागतेन त्वा छन्दसा युनज्मि वर्षाभिः । काठ ४१, ९ ।

१४३. आदित्येभ्यो न्यङ्कून् ( आलभते ) । मै ३,१४,९ ।

१४४. आदित्येभ्यो भुवद्भ्यश्चरुं निर्वपेद् भूतिकामः । तैसं २,३,१,१ ।

१४५. आदित्येभ्योऽमुम् (द्युलोकं प्रजापतिः प्रायच्छत्) । जै २, १४१ ।

१४६. आदित्यैर्नो भारती वष्टु यज्ञम् । तैसं ५,१,११,३; मै ३, १६, २ ।

१४७. आदित्यैर्नो वरुणः स ऽ शिशातु (ण्णः शर्म य ऽ सत् ⌊मै., काठ.⌋) । तैसं २, १, ११, २; मै ४, १२,२, काठ १०,१२ ।
१४८. आदित्यो दिवः (उदैत्) । जै १,३५७ ।
१४९. आदित्यो देवः स ऽ स्फानः । तैसं ३, ३,८, ६ ।
१५०. आदित्यो नवहोता । स तेजस्वी । तैआ ३, ७,४ ।
१५१. आदित्यो निवित् (वाजी ⌊तै.⌋) । तै १,३,६,४; जैउ ३,१,४, २ ।
१५२. आदित्यो बृहत् (बृहतः ⌊जै.⌋) । ऐ ५,३०; जै १,२९२ ।
१५३. आदित्यो यतोऽजायत ततो बिल्व उदतिष्ठत् । तैसं २,१,८,१ ।
१५४. आदित्यो यशः (यूपः ⌊तै.⌋) । तै २,१,५,२; माश १२,३,४,८ ।
१५५. आदित्यो राजनम् (साम) । जै २,१५ ।
१५६. आदित्यो वाऽअस्य (अग्नेः) दिवि वर्चः । माश ७,१,१,२३ ।
१५७. आदित्यो वा उद्गाता (+ अधिदैवं चक्षुरध्यात्मम् ⌊गो १, ४,३⌋) । गो १,२,२४;४,३ ।
१५८. आदित्यो वाऽएष गर्भो यत्पुरुषः । माश ७,५.२,१७ ।
१५९. आदित्यो वाव पुरोहितः । ऐ ८,२७ ।
१६०. आदित्यो वै घर्मः (चक्षुः ⌊जै.⌋) । जै २, ५४; माश ११,६,२,२ ।
१६१. आदित्यो वै देवसंस्फानः (यज्ञः ⌊मै.⌋) । मै ३,७,८; ९, १; गो २,४, ९ ।
१६२. आदित्यो वै प्राणः (ब्रह्म ⌊जैउ ३,१,४,९⌋) । जैउ ३,१,४,९;४,११,१,११ ।
१६३. आदित्यो वै भर्गः (वृषाकपिः ⌊गो.⌋) । गो २,६, १२; जैउ ४,१२,२,२ ।
१६४. आदित्यो ( अदितिदेवताकोऽदितेरुत्पन्नो वा) वै सोमः । काठ २४, ६; क ३७,७;४०,५ ।
१६५. आदित्योऽसि दिवि श्रितः । चन्द्रमसः प्रतिष्ठा । तै ३, ११, १,११ ।
१६६. आदित्यो ह्यस्य सर्वस्येष्टे । माश ६,१,३,१७ ।
१६७. आदित्यो ह्येवोद्यन् पुरस्ताद्रक्षा ऽ स्यपहन्ति । तैसं २, ६,६,३ ।
१६८. इमा आदित्याः (अदितेरुत्पन्नाः) प्रजाः । काठ २५,६ ।
१६९. इह वा असा आदित्य आसीत्, तमितोऽध्यमुं लोकमहर ऽ स्तद्यतोऽध्यमुं लोकमहर ऽ स्तस्माज्ज्योतिषो बिल्वोऽजायत, तस्माद् बैल्वो (यूपः) कार्यः । मै ३,९,३ ।
१७०. उच्छिष्टाद्वा आदित्या जाताः । काठ २८,६; क ४४,६ ।
१७१. उच्छेषणभागा (उच्छिष्टभागा ⌊मै.⌋ ) वा आदित्याः । मै १,६, १२ काठ २८,६; क ६, ५ ।
१७२. उत्तिष्ठन्त ऽ ह वा तानि रक्षा ऽ स्यादित्यं योधयन्ति यावदस्तमन्वगात्तानि ह वा एतानि,रक्षा ऽ सि गायत्रियाभिमन्त्रितेनाम्भसा शाम्यन्ति । तैआ २,२,१ ।
१७३. उद्यन्नु खलु वा आदित्यः सर्वाणि भूतानि प्रणयति तस्मादेनं प्राण इत्याचक्षते । ऐ ५,३१ ।
१७४. उद्यन्वा असा आदित्यो रक्षा ऽ स्यपाहत । मै ४,१,१३ ।
१७५. एकविंशो वा अस्य भुवनस्य विषुवान्, द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः । जै २,३८९ ।
१७६. एतद्वा आदित्यस्य पदं यद्भूमिः । गो १,२, १८ ।

१७७. एतद्वै 'ककुभ ँ रूपं वृषभस्य रोचते बृहद्' ( मा ८, ४९ ) य एष (आदित्यः) तपति । माश ११,५,९,१० (तु. तैसं ३,३,४,२) ।

१७८. एताभिर्वा आदित्या द्वन्द्वमाध्नुंवन्मित्रश्च वरुणश्च धाता चार्य्यमा चा ँशश्च भगश्चे-न्द्रश्च विवस्वांश्च । तां २४, १२, ४ ।

१७९. एते खलु वादित्या यद्ब्राह्मणाः । तै १, १, ९, ८ ।

१८०. एते वै देवयानान् पथो गोपायन्ति यदादित्याः । मै १, ६,१२ ।

१८१. एवमिव ( शुक्रमिव ) ह्यसा आदित्यः । मै २, ३, ६ ।

१८२. एष ( आदित्यः ) दीक्षितः(प्रजापतिः [काठ.]) । काठ १२, ६; गो १, २, १ ।

१८३. एष ( आदित्यः ) निम्रोचन् निग्राभः । तैसं ५, ४,६, ६ ।

१८४. एष ( आदित्यः ) रुचः प्रदाता । काठ ३४, ९ ।

१८५. एष वा अपरिपरः पन्था अरक्षस्यो येनासा आदित्य एति । मै ३, ७, ७; ४, ८, ५ ।

१८६. एष वाव दीक्षितो य एष ( आदित्यः ) तपति । जै २, ६२ ।

१८७. एष वै मृत्युर्यदादित्यो म्रोचन्नेव नाम । जै १, २७ ।

१८८. एष ( आदित्यः ) वै यशः (सत्यम् [ऐ.]) । ऐ ४, २०; माश ६, १, २, ३ ।

१८९. एष वै वृषा हरिः य एष ( आदित्यः ) तपति । माश १४, ३, १, २६ ।

१९०. एष वै शुक्रो ( संवत्सरो [माश १४, १, १, २७] ) य एष (आदित्यः ) तपति । माश ४, ३, १, २६; ३,३, १७; १४,१,१,२७ ।

१९१. एष ( आदित्यः ) वै सत्यम् ।

१९२. एष वै सुततेजा वैश्वानरः ( यदादित्यः ) । माश १०, ६, १, ८ ।

१९३. एष ( आदित्यः ) वै हंसः शुचिषद् । ऐ ४, २० ।

१९४. एष ( आदित्यः ) स्वर्गो लोकः । तै ३, ८, १०,३; १७, २; २०, २ ।

१९५. एष ( आदित्यः ) ह वा अह्नां विचेतयिता [°चेता+योऽसौ (सूर्यः) तपति [गो.]] । ऐ ६,३५; गो २, ६,१४ ।

१९६. एष ( आदित्यः ) ह्येवाऽऽसाम्प्रजानामृषभः । जैउ १, ९, २, ८ ।

१९७. एषो ( आदित्यः ) ऽन्तः । तैसं ७, २, ७, २ ।

१९८. ओमित्यसौ यो ऽसौ ( आदित्यः ) तपति । ऐ ५, ३२ ।

१९९. ओमित्यादित्यः । जैउ ३, ३, ३, १२ ।

२००. कतम आदित्या इति, द्वादश मासाः संवत्सर इति होवाच । एत आदित्याः ( °रस्यैत आदित्या [माश.] ) एते हीदं सर्वमाददाना यन्ति, (+ते यदिदं सर्वमादाना यन्ति [माश.]) तस्माद् आदित्या इति । माश ११, ६, ३, ८; जै २,७७ ।

२०१. कमग्निं चिनुते । सावित्रमग्निं चिन्वानः । असुमादित्यं प्रत्यक्षेण । तैआ १, २२,१० ।

२०२. किं नु ते मयि ( आदित्ये ) इति । ओजो मे बलम्मे चक्षुर्मे । जैउ ३, ५, ८, ८ ।

२०३. केतस्सुकेतस्सकेतस्ते न आदित्या जुषाणा अस्य हविषो व्यन्तु स्वाहा । सलिलस्सलिगस्सगर-स्ते न आदित्या जुषाणा अस्य हविषो व्यन्तु स्वाहा दिवो ज्योते विवस्व आदित्य ते नो देवा देवेषु सत्यां देवहूतिमासुवध्वमादित्येभ्यस्स्वाहा । काठ ८, १४ ।

२०४. गावो वा आदित्याः । ऐ ४, १७ ।

२०५. घृतभागा ( घृतभाजना [माश.] ) ह्यादित्याः । काठ १९, ९; माश ६, ६,१,११ ।

२०६. चक्षुरादित्यः । माश ३, २, २, १३; जैउ ३, १, २, ७ ।

२०७. चक्षुरेव स तत् स्वमजुहोदमुममेवादित्यम् । काठ ६, १ ।

२०८. चक्षुष आदित्यः ( निरभिद्यत ) । ऐआ २, ४, १; ऐउ १, १, ४ ।

२०९. चक्षुस्त्वाऽएतद्वैश्वानरस्य ( यदादित्यः ) । माश १०, ६,१, ८ ।

२१०. चित्र आदित्यानाम् । मै ३, १४, २० ।

२११. छन्दोभिर्वै देवा आदित्य ९ स्वर्गं लोकमहरन् । तां १२, १०, ६ ।

२१२. जगतीं स छन्दसां जयत्यादित्यान् देवान् देवानाम् । जै १, ३६ ।

२१३. जगती छन्द आदित्यो देवता श्रोणी । माश १०, ३, २, ६ ।

२१४. जगत्यादित्याः ( अन्वारभन्त ) । काठ ७, ६ ।

२१५. जगत्यादित्यानां ( +पत्नी [गो.] ) । मै १, ९, २; काठ ९, १०; गो २, २, ९ ।

२१६. जागतोऽसावादित्यः । जै २, ३६ ।

२१७. ज्योतिः शुक्रमसौ ( आदित्यः ) । ऐ ७, १२ ।

२१८. तं स ( भरद्वाजः सावित्रमग्निम् ) विदित्वामृतो भूत्वा स्वर्गं लोकमियाय । आदित्यस्य सायुज्यम् । तै ३, १०, ११, ५ ।

२१९. तत आदित्य उदतिष्ठत् । सा प्राची दिक् । तैआ १, २३, ५ ।

२२०. तत उ ह्यादित्याः स्वरीयुः । कौ ३०, ६ ।

२२१. तत् ( छिन्नं विष्णोश्शिरः ) पतित्वासावादित्योऽभवत् । माश १४, १, १, १० ।

२२२. तत्र ह्यादित्यः शुक्रश्चरति । गो १, २, ९ ।

२२३. तदसावादित्य इमांल्लोकान्त्सूत्रे समावयते तद्यत्तत्सूत्रं वायुः सः । माश ८, ७, ३,१० ।

२२४. तदसौ वा आदित्यः प्राणः । जैउ ४, ११, १, ९ ।

२२५. तद्दैव्यं क्षत्रम् (आदित्यलोकं प्रशंसति) । सा श्रीः । तद्ब्रध्नस्य विष्टपम् । तत्स्वाराज्यमुच्यते । तै ३, ८, १०, ३ ।

२२६. तद्यत्तत्सत्यम् । असौ स आदित्यः (+य एष एतस्मिन्मण्डले पुरुषः [माश १४,८,६,२३] ) । माश ६, ७, १, २; १४,८,६,२३ ।

२२७. तद्यत्तद्यज्ञस्य शिरोऽच्छिद्यतेति, सो ऽसावादित्यः, स उ एव प्रवर्ग्यः । जै ३, १२६ ।

२२८. तद्यदेतेषां भूतानामादत्त, तदादित्यस्यादित्यत्वम् । जै २, २६ ।

२२९. तद्यदेष ( आदित्यः ) सर्वैर्लोकैस्समस्तस्मादेष ( आदित्यः ) एव साम । जैउ १, ३, २,५ ।

२३०. तद्वा अदश्चक्षुर्मन्यन्ते यदसा आदित्यः । मै १, ८, १ ।

२३१. तन्न हैतावत् कया चन देवतया जितं यावदादित्येन । जै २, २५ ।

२३२. तपो वा असावादित्यः । काठसंक ११९ : ५ ।

२३३. तर्हि ( मध्यन्दिने ) तेक्ष्णिष्ठं तपति ( आदित्यः ) । तैआ २, १३, १ ।

२३४. तस्मा (आदित्याय) एताः सौरीः श्वेतां वशामालभेत, स (आदित्यः) एवास्मिन् (यजमाने) ब्रह्मवर्चसं दधाति । तैसं २, १, ८, १ ।

२३५. तस्मादादित्यश्चरुः प्रायणीयो भवत्यादित्य उदयनीयः । ऐ १, ७ ।

२३६. तस्मादेष ( आदित्यः ) त्रीनृतून् दक्षिणैति त्रीनुदङ् । जै २,३८६ ।

२३७. तस्मिन्नेतस्मिन्मण्डले तेजोमयश्छन्दोमयः पुरुषः ( आदित्यः ) । स प्राणस्स इन्द्रस्स प्रजापतिस्सः दीक्षितः । जै २, ६२ ।

२३८. तस्य ( प्रजापतेः ) यद् रेतसः प्रथममुददीप्यत तदसावादित्योऽभवत् । ऐ ३, ३४ ।

२३९. तस्य ( आदित्यस्य ) रथप्रोतश्चासमरथश्च सेनानीग्रामण्याविति वार्षिकौ तावृतू । माश ८, ६, १,१८ ।

२४०. तस्य ( प्रजापतेः ) शोचत आदित्यो मूर्ध्नो ऽसृज्यत । तां ६, ५, १ ।

२४१. तस्या ( पृथिव्याः ) असौ वत्सो योऽसौ ( आदित्यः ) तपति । जै १, ३२८ ।

२४२. तस्यादित्या अधिपतयः (स्वर्गस्य लोकस्य) । तै ३,८,१८,२ ।

२४३. तस्याम् (आसन्द्याम्) एतमादित्यम् ( देवाः) अभ्यषिञ्चन्त । जै २,२५ ।

२४४. तस्येमा एव दिशः पत्न्य आसन् (इन्द्रस्य=आदित्यस्य ) । तं हेमास्तिस्रो दिशोऽतिचेरुः । इयं हैवास्यानुव्रततमास येयं दक्षिणा दिक् । तस्मादेष एतामेवाभ्युपावर्तते । यद्यप्युत्तरत उदेत्यथैतामेवाभ्युपावर्तते । जै २,६२ ।

२४५, तस्यैतदन्नं क्यमेष चन्द्रमास्तदर्क्यं यजुष्टः (अर्कस्य=आदित्यस्य) । माश १०, ४,१,२२ ।

२४६. तस्यैतस्याकाशस्यात्मा दमुमूढो यदसावादित्यः । जै २, ५६ ।

२४७. तस्यैतस्या (+ असाव् [ऐआ.]) ऽऽदित्यो रसः (संवत्सरस्य) । ऐआ ३,२,३; शांआ ८,३ ।

२४८. तान् हादित्यानङ्गिरसो याजयाञ्चक्रुः । गो २, ६,१४ ।

२४९. तिस्रो मेष्य आदित्याः । काठ ४९,९ ।

२५०. तेषाम् ( नक्षत्राणाम् ) एष उद्यन्नेव वीर्यं क्षत्रमादत्त तस्मादादित्यो नाम । माश २, १,२,१८ ।

२५१. ते हादित्याः पूर्वे स्वर्गं लोकं जग्मुः पश्चेवाङ्गिरसः षष्ट्यां वा वर्षेषु । ऐ ४, १७ ।

२५२. त्रिर्वा आदित्यास्सप्त सप्त । काठ ११,६ (तु. मै २, २,१) ।

२५३. त्रिर्हं वा एष (मघवा=इन्द्रः [=आदित्यः] ) एतस्य मुहूर्त्तस्येमाम्पृथिवीं समन्तः पर्येतीमाः प्रजास्संचक्षाणः । जैउ १, १४, ३,९ ।

२५४. त्रिष्टुभि प्रस्तुतायां चक्षुषादित्यं संदध्यात् । जै १,२७० ।

२५५. त्रीणि वा आदित्यस्य तेजाꣳसि, वसन्ता प्रातर् ग्रीष्मे मध्यन्दिने शरद्यपराह्णे । तैसं २, १,२,५ ।

२५६. त्रैष्टुब्जागतो वा आदित्यः । तां ४,६,२३ ।

२५७. त्रैष्टुभो वा असावादित्यः शुक्लं कृष्णं पुरुषः । जै १,३२४ ।

२५८. त्रैष्टुभो वा एष य एष (आदित्यः) तपति । कौ २५,४ ।

२५९. दक्षिणाꣳ ह्यसौ दिशमन्वावर्तते योऽसौ (आदित्यः) तपति । काश ५,१,१,२२;२, १,८ ।

२६०. दक्षिणा पर्यावर्तते, स्वमेव वीर्यमनु पर्यावर्तते, तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवाऽऽवृतमनु पर्यावर्तते । तैसं ५,२,१,३ ।

२६१. दिवं लोकानां जयत्यादित्यं देवं देवानाम् । जै १, २७ ।

२६२. दिवमादित्याः (अजयन्) । काठसंक ५३ : २-३ ।

२६३. दिवमेव तृतीयस्य तृचस्य प्रथमया स्तोत्रियया जयति, आदित्यं द्वितीयया, नक्षत्राणि तृतीयया । जै १,२४५ ।

२६४. देवलोको वा आदित्यः । कौ ५,७; गो २, १, २५ ।

२६५. देवविशा (आदित्याः) मनुष्यविशाया ईशे । काठ ११,६ ।

२६६. द्यां भारत्यादित्यैरस्पृशत् । मै ४, १३,८ ।

२६७. द्वय्यो ह वा इदमग्रे प्रजा आसुः । आदित्याश्चैवाङ्गिरसश्च । माश ३, ५,१, १३ ।

२६८. द्वादशादित्या द्वादशाक्षरा जगती । तैसं ३,४,९,७ (तु. जै १, १४१) ।

२६९. द्वादशादित्यास् (द्वादशमासादित्या अग्निमबिभरुः) ते दिवमाजयञ्जगतीं छन्दस्ततो वै ते व्यावृतमगच्छञ्छ्रैष्ठ्यं देवानाम् । काठ २१,५; क ३१,२० ।

२७०. द्विदेवत्येभ्य आदित्यो (ग्रहः) निर्गृह्यते । मै ४,६,९ ।

२७१. धातासौ स आदित्यः । माश ९,५,१,३७ ।

२७२. पञ्चर्तवो द्वादश मासास्त्रय इमे लोका असा आदित्य एकविंश एष स्वर्गो लोकः । काठसंक १२२ : ८-९ ।

२७३. पञ्चान्यस्तिस्र आदित्यानाम् । काठ ४९, ६ ।

२७४. पर्ज्जन्य (पशव [तां.]) आदित्यः । गो १,४,३; तां २३,१५,४ ।

२७५. पशवो वा (+एते यत् [तैसं.]) आदित्यः (ग्रहः) । तैसं ३,५,५,२; मै ४,६,९; काठ २८,६ ।

२७६. प्रजननं जगती । सोऽसावादित्यः । जै २, ३६ ।

२७७. प्रजा आदित्यः (ग्रहः) । मै ४, ६,९ ।

२७८. प्रजापतिरसा आदित्यः । मै २, ३, ३ ।

२७९. प्रजापतिर्वै पिताऽऽदित्यः पुत्रः । जै २, १५ ।

२८०. प्राङ् चार्वाङ् चादित्यस्तपति । तां १२, १०, ६ ।

२८१. प्राची च प्रतीची च वसूनां, रुद्राणामादित्यानाम् । तैसं ४, ४,११, २-३; काठ २२, ५ ।

२८२. प्राण आदित्यः । तां १६, १३, २ ।

२८३. प्राणा वा आदित्याः । प्राणा हीदं सर्वमाददते । जैउ ४, २, १,९ ।

२८४. प्राणो ह्येष य एष (आदित्यः) तपति । ऐआ २,२,१;३ ।

२८५. बार्हतो वा एष य एष (आदित्यः) तपति । कौ १५,४;२५,४; गो २, ३,२०; शांआ २,१७ ।

२८६. बार्हतो वासावादित्यः । जै २, ३६ ।

२८७. ब्रध्नस्य विष्टपं चतुस्त्रिंशः (+इति दक्षिणतो ऽसौ वा आदित्यो ब्रध्नस्य विष्टपम् [काठ.]) । मै २, ८, ४; काठ २०, १३ ।

२८८. ब्रह्मण एतदुदरणं यदसा आदित्य उदेति । काठ ९, १५ ।

२८९. ब्रह्मवर्चसमसा (°साव् [क.]) आदित्यस्तेजसा (दधाति) । मै ४, ७,३; काठ २०,१३; २९, ७; क ४५, ८ ।

२९०. भूमो ऽएष देवानां यदादित्याः । माश ६, ६, १, ८ ।

२९१. मण्डलमेवऽर्चः (आदित्यस्य) । माश १०, ५, १, ५ ।

२९२. मह इत्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते । तैआ ७, ५, २; तैउ १, ५,२ ।
२९३. महिष्यै गृहान् परेत्याऽऽदित्यं ( अदितिदेवताकम् ) चरुं निर्वपति । माश ५, ३,१,४ ।
२९४. य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छति । तैआ १०, ६४, १ ।
२९५. य एवायं चक्षुषि पुरुष एष एवादित्यः । जै २, ५६ ।
२९६. य एवासौ (आदित्यः ) तपत्येष एव विराट् । जै १, ३४० ।
२९७. य एष आदित्ये पुरुषः स परमेष्ठी ब्रह्माऽऽत्मा । तैआ १०,६३,१ ।
२९८. यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति स एतामविं वशामादित्येभ्यः कामायालभेत । तैसं २, १,२,३ ।
२९९. यच्चतुर्थेऽहन्प्रवृज्यते । आदित्यो भूत्वा रश्मीनेति । तैआ ५, १२, १ ।
३००. यच्छुक्लानाम् ( व्रीहीणाम् ) आदित्येभ्यो निर्वपति तस्माच्छुक्ल इव वैश्यो जायते । काठ ११,६ ।
३०१. यज्जीवं स विवस्वाँ आदित्यः । काठ ११, ६ ।
३०२. यत्तृतीयम् (प्रजापते रेतस उत्पन्नम् ) अदीदेदिव त आदित्या अभवन् । ऐ ३, ३४ ।
३०३. यथादित्या वसुभिः सम्बभूवुः । तैसं २, १, ११, ३ ।
३०४. यथासौ दिव्यादित्य एवमिदं शिरसि चक्षुः । ऐआ ३, १, २; शांआ ७,४ ।
३०५. यथाऽसौ (आदित्यः) देवाना ँ रोचते···एवमेवैष मनुष्याणां रोचते । तैसं ५, ३, १०, ३ ।
३०६. यदनुदितः ( आदित्यः ) स हिङ्कारः । जैउ १, ३,२,४ ।
३०७. यदसुराणां लोकानादत्त । तस्मादादित्यो नाम । तै ३, ९, २१, २ ।
३०८. यदा खलु वा असावादित्यो न्यङ् (यदासा आदित्योऽर्वाङ् [काठ.]) रश्मिभिः पर्यावर्ततेऽथ वर्षति । तैसं २,४, १०, २; काठ ११, १० ।
३०९. यदादित्यो ऽस्तमेति वायुमेवाप्येति । जै २, ४९ ।
३१०. यदेतत्पुरुषे रेतो भवति, आदित्यस्तद्रूपम् । ऐआ २, ३, ७ ।
३११. यदेतदोमित्यादत्ते । असौ वा आदित्य एतदक्षरम्······स यदोमित्यादत्ते ऽमुमेवैतदादित्यं मुख आधत्ते । जै १, ३२२ ।
३१२. यदेतत् ( आदित्य- ) मण्डलं तपति । तन्महदुक्थं ता ऋचः स ऋचां लोकः । माश १०, ५, २, १ ।
३१३. यद्वाऽएष एव शुक्रो य एष (आदित्यः) तपति तद्यदेष तपति तेनैष शुक्रः । माश ४,२,१,१ ।
३१४. यन्महान्देव आदित्यस्तेन । कौ ६, ६ ।
३१५. यमु ह (मार्तण्डं देवा आदित्याः) तद्विचक्रुः स विवस्वानादित्यस्तस्येमाः प्रजाः । माश ३, १,३,४ ।
३१६. यस्माद्वायत्रोत्तमस्तृतीयः ( त्रिरात्रः ) तस्मादर्वाङादित्यस्तपति । तां १०, ५, २ ।
३१७. या शुचिर् (अग्नेस्तनूरासीत् ) अमुमादित्यं तया ( प्राविशत् ) । काठ ८,९ ।
३१८. ये वै तमादित्यं पुरुषं वेदयन्ते स इन्द्र स प्रजापतिः स ब्रह्म इति । काठसंक १३८:२०-२१ ।
३१९. ये शुक्लास् [+ स्युः (व्रीहयः) [तैसं.]] तमादित्यं (°मादित्येभ्यः [काठ.]) चरुं निर्वपेत् । तैसं २,३,१,३; काठ ११,६ ।

३२०. योऽसौ ( आदित्यः ) तपन्नुदेति । स सर्वेषां भूतानां प्राणानादायोदेति । असौ यो (आदित्यः) ऽस्तमेति स सर्वेषां भूतानां प्राणानदायास्तमेति··· । तैआ १, १४, १ ।

३२१. रश्मिरित्येवादित्यमसृजत । तैसं ५,३,६, १ ।

३२२. रात्रेर्वत्सः श्वेत आदित्यः । तैआ १,१०,५ ।

३२३. वरुण आदित्यैः ( +न्यद्रवत् [माश.]) । मै २,२,६; ऐ १,२४; माश ३,४,२,१ ।

३२४. वरुणस्त्वाऽऽदित्यैः पश्चाद्रोचयतु जागतेन छन्दसा । तैआ ४, ६, १ ।

३२५. वर्षाभिर्ऋतुनादित्याः स्तोमे सप्तदशे स्तुतं वैरूपेण विशौजसा । तै २, ६, १९, १-२ ।

३२६. वसवो वै रुद्रा आदित्या स ९ स्नावभागाः । तै ३, ३, ९, ७ ।

३२७. वायुर्वा एतं ( आदित्यम् ) देवतानामानशे । तां ४, ६, ७ ।

३२८. विडेष आदित्यश्चरुः । माश ६, ६, १, ७ ।

३२९. विभाति केतुररुणः पुरस्तादादित्यो विश्वा भुवनानि सर्वा । सुगं नु पन्थामन्वेति प्रजानन् पिता देवानामसुरो विपश्चित् । मै ४, १४, १४ ।

३३०. विमानो ह्यसा आदित्यः स्वर्गस्य लोकस्य । मै ३, ३, ८ ।

३३१. विराड् भूत्वाऽऽदित्योऽभवत् ( प्रजापतिः ) । जै १, ३१४ ।

३३२. विवस्वन्नादित्यैष ते सोमपीथः । माश ४, ३, ५, १८ ।

३३३. विश्वकर्मा त्वाऽऽदित्यैरुत्तरात् ( °रुत्तरतः [माश.]) पातु । तैसं १, २, १२,२; काठ २, ९; माश ३, ५, २, ७ ।

३३४. विश्वकर्मा त्वोत्तरादित्यैः पातु । क २, ३ ।

३३५. विश्वकर्मा व आदित्यैरुत्तरत उपदधताम् । तैआ १, २०, १ ।

३३६. वैद्युत (आतपो वत्सः) आदित्यस्य । तैआ १, १०,६ ।

३३७. व्युषि सविता भवस्युदेष्यन् विष्णुरुद्यन्पुरुष उदितो बृहस्पतिरभिप्रयन्मघवेन्द्रो वैकुण्ठो माध्यन्दिने भगोऽपराह्ण उग्रो देवो लोहितायन्नस्तमिते यमो भवसि ( हे आदित्य त्वम् ) । अभ्रसु सोमो राजा निशायाम्पितृराजस्स्वप्ने मनुष्यान्प्रविशसि पयसा पशून् । विरात्रे भवो भवस्यपररात्रेऽङ्गिरा अग्निहोत्रवेलायाम्भृगुः । जैउ ४, ५, १, १-३ ।

३३८. शतयोजने ह वा एष (आदित्यः) इतस्तपति । कौ ८, ३ ।

३३९. शिवमसौ ( आदित्योऽस्तु ) तपन् । तैसं ७, ५,२०,१ ।

३४०. श्रद्धा वै ब्रह्मवर्चसमेकविंश स्तोमानाम् । असौ हि स आदित्यः । जै २, २१८ ।

३४१. श्रीश्च ते (पुरुषस्य = आदित्यस्य) लक्ष्मीश्च ते पत्न्या अहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ ( द्यावापृथिव्यौ ) व्यात्तम् (विकासितमुखम्) । काठसंक १०३ : ९

३४२. श्वेत ९ रश्मिं बोभुज्यमानम् । अपां नेतारं भुवनस्य गोपाम् । इन्द्रं (आदित्यम्) निचिक्युः परमे व्योमन् । तैआ ३, ११, ९ ।

३४३. श्वेता अवरोकिण आदित्यानाम् । मै ३, १३, ७ ।

३४४. श्वेतो रश्मिः ( शुक्लवर्णरश्मियुक्त आदित्यः) परि सर्वं बभूव । तैआ ३,११,१० ।

३४५. षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाड्यः समन्तं परियन्ति । माश १०,५,४, १४ ।

३४६. षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्य रश्मयः । माश १०, ५, ४, ४ ।

३४७. संवत्सरो ऽसावादित्यः । तैआ १०, ६३, १ ।
३४८. स (प्रजापतिः) आदित्येन दिवं मिथुनं समभवत् । माश ६, १,२,४ ।
३४९. स (आदित्यः) उद्यन्नेवामूम् (दिवम्) अधिद्रवत्यस्तं यन्निमाम् (पृथिवीम्) अधिद्रवति । माश १,७,२,११ ।
३५०. स (आदित्यः =सूर्यः) एवास्मिन् (यजमाने) ब्रह्मवर्चसं दधाति । तैसं २,३,२,३ ।
३५१. स एष (आदित्यः) एकशतविधस्तस्य रश्मयः शतं विधा एष एवैकशततमो य एष तपति । माश १०,२,४,३ ।
३५२. स एष वा एको वीरो य एष (आदित्यः) तपत्येष इन्द्र एष प्रजापतिः । जै १, ८ ।
३५३. स एष वाग्निष्टोमो य एष (आदित्यः) तपत्येष इन्द्र एष प्रजापतिरेष एवेदं सर्वम् । जै १,३१४ ।
३५४. स एष (आदित्यः) सप्तरश्मिर्वृषभस्तुविष्मान् । जैउ १, ९, १,२ ।
३५५. स एषोऽपहतपाप्मा (आदित्यः) तपति (+तस्य छाया नास्ति [जै २,३७०]) । जै २,८२;३७०
३५६. सत्यं य एष [सत्यमेष (आदित्यः) [माश.]] तपति । जै २,६६; माश १४, १,२,२२ ।
३५७. सत्य ँ हैतद्यद्रुक्मः । ······तद्यत्तत्सत्यम् । असौ स आदित्यः । माश ६,७,१,१-२ ।
३५८. सप्त ह्येत आदित्यस्य रश्मयः । जैउ १, ९, २, ८ ।
३५९. सप्तादित्याः । तां २३,१५,३ ।
३६०. समादित्यैनो वरुणो अजिज्ञिपत् । तैसं २,१, ११, ३ ।
३६१. समादित्यैर्वरुणो विश्ववेदाः (नोऽव्यात्) । मै ४,१२,२; काठ १०,१२ ।
३६२. सम्राडसि प्रतीची दिगादित्यास्ते देवा अधिपतयः सोमो हेतीनां प्रतिधर्ता सप्तदशस्त्वा स्तोमः पृथिव्यां श्रयतु । मरुत्वतीयमुक्थमव्यथायै स्तभ्नोतु (°क्थमव्यथयत् स्तभ्नातु [तैसं.]) वैरूपं साम । तैसं ४, ४, २, १-२; मै २, ८, ९ ।
३६३. स य आदित्यश्चक्षुरेव तत् । जै १, २४९ ।
३६४. स य एतदेवं वेदैष एवादित्यो भूत्वैतस्यां राजासन्द्यामास्ते । जै २, २६ ।
३६५. स यदादित्य उदेति । एतामेव तत्सुवर्णां कुशीमनुसमेति । तै १, ५,१०, ७ ।
३६६. स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात् (+तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति [ऐआ.]) । ऐआ ३, २, ३; शांआ ८, ३ ।
३६७. स यश्चायं पुरुषे यश्चासावादित्ये । स एकः । तैआ ९, १०, ४; तैउ ३, १०, ४ ।
३६८. स य स कूर्मो (यज्ञो [माश १४, १, १, ६.]) ऽसौ स आदित्यः । माश ६, ५, १, ६; ७, ५, १, ६; १४,१,१,६, ।
३६९. स यः स विष्णुर्यज्ञः सः । स यः स यज्ञो ऽसौ स आदित्यः । माश १४, १,१, ६ ।
३७०. स यः स वैश्वानरः (संवत्सरः [माश १०, २, ४, ३]) असौ स आदित्यः । माश ९, ३, १,२५; १०,२,४,३ ।
३७१. सर्पा वा आदित्याः । तां २५, १५, ४ ।
३७२. सर्वतोमुखो वा ऽअसावादित्य एष वाऽइद ँ सर्वं निर्धयति यदिदं किञ्च पुष्यति तेनैष सर्वतोमुखस्तेनान्नादः । माश २, ६, ३,१४ ।

३७३. सलिलः सलिगः सगरस्ते न आदित्याः···, केतः सुकेतः सकेतस्ते न आदित्याः···; विवस्वन्नादित्य ···, आदित्येभ्यः स्वाहा। मै १, ७, १।

३७४. स वा एष (आदित्यः) इन्द्र वैमृध उद्यन् भवति सवितोदितो मित्रस्संगवकाल इन्द्रो वैकुण्ठो माध्यन्दिने समावर्त्तमानश्शर्व उग्रो देवो लोहितायन् प्रजापतिरेव संवेशेऽस्तमितः। जैउ ४,७,२,१०।

३७५. स वा एष (आदित्यः) न कदाचनास्तमयति नोदयति। तद्यदेनं पश्चादस्तमयतीति मन्यन्ते अह्न एव तदन्तं गत्वाथात्मानं विपर्य्यस्यतेऽहरेवाधस्तात्कृणुते रात्रीं परस्तात्। गो २, ४, १०।

३७६. स वा एष (आदित्यः) न कदाचनास्तमेति नोदेति तं यदस्तमेतीति मन्यन्तेऽह्न एव तदन्तमित्वाऽथात्मानं विपर्यस्यते रात्रिमेवावस्तात् कुरुते ऽहः परस्तादथ यदेनं प्रातरुदेतीति मन्यन्ते रात्रेरेव तदन्तमित्वाथात्मानं विपर्यस्यते ऽहरेवावस्तात्कुरुते रात्रिं परस्तात्स वा एष न कदाचन निम्रोचति। ऐ ३, ४४।

३७७. सविता त्वा ऽऽदित्यैः पश्चाद् रोचयतु। मै ४, ९, ५।

३७८. सहस्रं हैत आदित्यस्य रश्मयः। तेऽस्य युक्तास्तैरिदं सर्वं हरति तद्यदेतैरिदं सर्वं हरति तस्माद्धरयः (रश्मयः) "युक्ता ह्यस्य (इन्द्रस्य) हरयः शतादश" (ऋ० ६, ४७, १८) इति। जैउ १,१४,३,५।

३७९. सामवेद आदित्यात् (उदैत्)। जै १, ३५७।

३८०. साम्नामादित्यो देवतं तदेव ज्योतिर्जागतच्छन्दो द्यौः स्थानम्। गो १, १, २९।

३८१. सा या सा वागसौ स आदित्यः। माश १०, ५, १, ४।

३८२. सुदिति (°दी° ⌊तैसं.⌋) रस्यादित्येभ्यस्त्वादित्याञ्जिन्व। तैसं ४, ४, १, २; काठ १७, ७; ३७, १७।

३८३. सुदीतिरित्यादित्यान् (असृजत)। तैसं ५,३,६,१।

३८४. सुवरित्यादित्यः। तैआ ७,५,२; तैउ १, ५,२।

३८५. स्वयंविलीनम् (आज्यम्) आदित्यस्य। काठ २३, १।

३८६. स्वरित्येव सामवेदस्य रसमादत्त (प्रजापतिः)। सोऽसौ द्यौरभवत्। तस्य यो रसः प्राणेदत् स आदित्योऽभवद्रसस्य रसः। जैउ १,१,१,५।

३८७. स्वर्गं लोकमायन् (आदित्याः) अहीयन्ताङ्गिरसः। तां १६, १२, १।

३८८. स्वर्भानुर्वा आसुर आदित्यं तमसाऽविध्यत्। तं देवाश्चर्षयश्चाभिषज्यन्। त एतानि दिवाकीर्त्यानि सामान्यपश्यन्। तैरस्य तमोऽपाघ्नन्। जै २,३९० (तु. तां ४,६,१३)।

३८९. हन्तेति चन्द्रमा ओमित्यादित्यः। जैउ ३, २,१,२॥ [°त्य- अग्नि- ७५; २२८; २६७; ३७८; ३७९; ३८०; ३८१; ३८६; ४३७; ४३९; ५२६; अग्निहोत्र- ४२; ५२; अग्निहोत्री- २; अङ्गिरस्- २; २०; २१; २३; २४; २७; अध्वर्यु- १३; अनडुह्- ३; अनुख्यातृ- १; अन्त- ,९; अप्- ५७; १३४; अपरिपर-; अप्रतिधृष्या-; अभिप्लव- १; ३; अमृत- ३४; अयन- १, अर्क- ५; अर्कपुष्प- १; अश्मन्- ३; अश्व- ३६; ३८; ५८; ५९; ६९; अश्वमेध- ३,४;५; अहन्- ४३; २आज्य- १; ४ द्र.]।

आदित्य-ग्रह-

१. अथैष सरसो ग्रहो यदादित्यग्रहः । कौ १६,१;३०,१ ।

२. आदित्यग्रहं (अनु) गावः (प्रजायन्ते)। तैसं ६, ५, १०,१ ।

३. सवनततिर्वा आदित्यग्रहः । कौ १६, १ ।

आदित्य-धामन्-

१. आदित्यधामानो वा अन्ये (उत्तरे [मै.]) प्राणा अङ्गिरोधामानोऽन्ये (अधरे [मै.]) । मै ३,२,९; काठ २०,११ ।

२. ये पुरस्तात् (प्राणाः) त आदित्यधामानः । काठ २०, ११, क ३१,१३ ।

आदित्य-पात्र-

१. अथैतदादित्यपात्रं पुनः प्रयुज्यते, गा ९ वा एतत् प्रति । मै ४, ८, ८ ।

२. आदित्यपात्रं प्रयुज्यते गाव एव तत् पशूनामनुप्रजायन्ते । काठ २८,१० ।

३. यदादित्यपात्रं प्रयुज्यते गा एव तेन पशूनां दाधार । क ४५,१ ।

आदित्य-वत्- वरुणायादित्यवते यवमयं चरुम् (निर्वपेत्) । मै २, २, ६ ।

आदित्य-स्थ- पुरुषो यजू ९ षि (आदित्यस्थः) । माश १०,५,१,५ ।

आदित्या- पष्ठौही गर्भिण्यादित्या । मै २,६,१३ ।

आदेश (ब्राह्मणवाक्य-)- आदेश आत्मा । तैआ ८,३,१; तैउ २,३,१ ।

आधवनीय-

१. इन्द्राय त्वेत्याधवनीयम् (अभिमृशेत्) । तैसं ३,२,१,३ ।

२. निभूयपूराधवनीये । काठ ३४,१६ ।

आधाव- एतद्वा अपां नामधेयं गुह्यं यदाधावाः । तैसं ३,३,४,१ ।

आधि- चारुः कृपणकाशी कामो गन्धर्वस्तस्याऽऽधयोऽप्सरसः शोचयन्तीर्नाम । तैसं ३,४, ७, ३ ।

आधिपत्य- अधिपति- द्र.

आधीत-

१. आधीतं बर्हिः । मै १,९,१ ।

२. प्रजा वा आधीतं, पशव आधीतिः । मै १, ४,१४ ।

आधीत-यजुस्-

१. ततो यानि त्रीणि स्रुवेण जुहोति । तान्याधीतयजू ९ षीत्याचक्षते । माश ३,१,४,२ ।

२. तद्यदस्यैता आत्मन्देवता आधीता भवन्ति तस्मादाधीतयजू ९ षि नाम । माश ३,१,४,१४ ।

३. प्रजापतिर्वै यत् किञ्च मनसादीधेत्तदाधीतयजुर्भिराप्नोत्. तदाधीतयजुषामाधीतयजुष्ट्वम् । मै ३,६,४ ।

आधीति- आधीत- द्र. ।

आध्वर्यव- अध्वर्यु- द्र. ।

आनति- चक्षुरानतिः । जै १,१४ ।

आनन्त्य- अनन्त- द्र. ।

आनन्द-

१. आनन्दं नन्दथुना (°थुभ्याम् [काठ.]) । तैसं ५,७, १९,१; काठ ५३,९ ।

२. आनन्दो ब्रह्मेति व्यजानात् । तैआ ९,६,१; तैउ ३,६,१ ।

